विशेषस्तदिव आचरतीति क्यङि "दीर्घश्च्वि"० [४।३।१०८] इति दीर्घे, क्विपि, तल्लोपे "अतः" [४।३।८२] इत्यल्लोपे "य्वोः प्वय्०" [४।४।१२१] इति यलोपे ताम्रास्तथा इः कामस्तदिव आचरतीति कर्तुः क्विपि धातुत्वे शतरि अयन् । द्वयोर्विशेषणसमासे ताम्रायन् । कया ? दीप्रा दीपनशीला या दीपनं "क्रुत्सम्पदादिभ्य" [५।३।११४] क्विपि–दीप् कान्तिस्तया दीप्रदीपा जिनस्य सुवर्णवर्णत्वात्–पीत-रक्तयोरैक्यात्–इति वर्णनम् । पुनः किं० 'लषी कान्ता' [९२७] कान्तिरिच्छा लषतीति क्विपि सौ "धुटस्तृतीय" [२।१।७६] इति षस्य डत्वे, ड-लयोरैक्यात् व्यत्यये, डल् इव डल् वाञ्छकः । कथम् ? प्रति लक्षीकृत्य । काम् ? ई लक्ष्मीरष्टप्रातिहार्यरूपा [ताम् लक्षीकृत्य] । प्रभोः सर्वत्र तुल्यमनोवृत्तित्वेऽपि कविना अष्टमहाप्रातिहार्यश्री-भोक्तृत्वदर्शनात् तदिच्छा उपचर्यते । सिद्धये किं० 'अव रक्षणे'० [४८९] इति गत्यर्थाद् अवते अवन्ति जानन्ति तत्त्वातत्त्वमिति क्विपि "मव्यवि०" [४।१।१०९] इत्युपान्त्येन सहोटि ऊवो विचक्षणजनास्तेषाम् । 'हो निपाते च हस्ते, दारुणि शूलिनि" [ ] इति एकाक्षरनाममालावचनात् हो हस्तः स एव "शरं जले" [हैम० अने० २,४६५] इत्यनेकार्थात् र-लयोरैक्यात् शलं तस्माद् भवतीति "क्वचित्" [५।१।१७१] डे शलभं कमलं करकमलमित्यर्थ तस्मिन् प्रकर्षेण वसतीति क्विपि "यजादिवश्-वच ०" [४।१।७२] इति य्वृति सस्य षत्वे, र-लयोरैक्ये ऊह–शलभप्लोट् तस्यै ऊहशलभप्लोषे । पुनः किं० कौ पृथिव्यां राजतीति "क्वचित्" [५।१।१७१] डे कुरो यः अयः शुभकर्म तम् । 'तायृङ पालने [८०६] इति तायते पालयतीति क्विपि "य्वो प्वय्०" [४।४।१२१] इति यलुपि चतुर्थ्याम् । "लुगातोऽनापः" [२।१।१०७] इत्यालोपे कुरायते चित्रत्वाद् विसर्गानुस्वारयो-र्भावाभावौ न दोषाय। एवं यथासम्भवं सर्वत्र ज्ञेयम् । ड-लादीनाम् ऐक्यं तु पूर्वं कथितमेव ॥३॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥४॥

[ [1]सिद्धये वर्धमानः स्तात् [2]ताम्रा [3]यन्नखमण्डली[4]म् [5]।
[6]प्रत्यूहः–शरभप्लोषे[7] दीप्रदीपा[8]ऽऽकुलायतेः[9][10] ॥४॥ ]

[ १ 'सिद्धय' शब्दस्य सप्तम्या एकवचनम् 'यन्नखमण्डलि' इत्यस्य विशेषणम् । २ °ताम्रास्' शब्दस्य प्रथमाया एकवचनम् 'इ' इत्यस्य विशेषणम् । ३ 'यन्नखमण्डला' शब्दस्य सप्तम्या एकवचनम् । ४ °मण्डलि+ईम्=मण्डलीम् । ५ ईम् प्रति इति संबन्ध । ६ ऊहस्–शरभप्रोषे सप्तम्या एकवचनम् । 'सिद्धये' इत्यस्य विशेषणम् । ७ प्र+ऊष्+अण्–प्रोष् = प्रोषे । ८ तृतीयाया एकवचनम् 'दीप्रदीप्' इत्यस्य । ९ आकुलायत ह्यस्तन्या क्रियापदम् । १० °यत+इ = °यते । ]

व्याख्या–वर्धमानो जिनः ई लक्ष्मी प्रति स्तात् इति सम्बन्धः । स इति ग्रहणात् यस्य नखाः पादनखास्तेष्वतिभक्तत्वान्मण्डल इव श्वेवाचरतीति क्यङि, क्विपि, तल्लोपे "अतः" [४।३।८२] इत्यल्लोपे "य्वोः प्वय्०" [४।४।१२१] इति यलोपे यन्नखमण्डलाः सप्तम्याम् "ङुगातोऽनापः" [२।१।१०७] इत्यालोपे यन्नखमण्डलि यत्पादाम्बुजसेवके इत्यर्थः । सिद्धा सम्पन्ना या लक्ष्मीर्यस्य स सिद्धयः इभ्यजनस्तस्मिन् सिद्धये सति इः काम आकुशयत आकुलोऽभूदित्यर्थः । कोऽर्थः ? यस्य सेवकजने सति कामो भयभ्रान्तोऽभूदित्यर्थः । इः किं० ताम्रवद् 'असी गत्यादानयोश्च' [९३२] इति चानुकृष्टदीप्त्यर्थाद् असति दीप्यते इति क्विपि सो रुत्वे "अवर्ण-भो-भगो०" [१।३।२२] इति रलोपे ताम्रा रक्तवर्णत्वात् । सिद्धये किंभू० 'अव रक्षण०' [४८९] इति दीप्त्यर्थात् "भ्यादिभ्यो वा" [५।३।११५] इति क्विपि ऊः कान्तिस्तया कृत्वा "हस्रो दिनम्" [उणादिसू० ३८७] इत्युणादिवचनात् हस्रं दिनं करोतीति णिजि, क्विपि "न सन्धि०" [७।४।१११] इति स्थानिवद्भावाभावात् "संयोगस्यादौ स्कोर्लुक्" [२।१।८८] इति सलोपाभावे "पदस्य" [२।१।८९] इति रलोपे, सस्य रुत्वे विसर्गत्वे च ऊहः सूर्यः तथा शरं जलं र-लयोरैक्यात् शलाद् भवतीति क्वचिड्डे शलभश्चन्द्रः तौ प्रकर्षेण ऊषति "कर्मणोऽण्" [५।१।७२] इत्यणि ऊष [प्रोष]-शलभप्लोषः तस्मिन् ऊहःशलभ प्लोपे श्लेषतो विसर्गाभावः रो लत्वं च । कया ? दीप्रा या–दीपनम्–दीप् कान्तिस्तया ॥४॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥५॥
[सिद्धये वर्धमानः स्ताऽत्ताऽऽम्लाः ! यन् न खमण्डलीः ।
प्रत्यूह शलभप्लोषे दीप्रदीपां कुरायतेः ॥५॥]

[१ वर्धमान् इत्यस्य सबोधनबहुवचनम् । २ 'स्त' इति द्वितीयपुरुषबहुवचनं पञ्चम्या क्रियापदम् । ३ अत्त इत्यपि 'स्त'वत् क्रियापदम् 'अद्'धातो । ४ आ+आम्ला = आम्ला सबोधनबहुवचन 'वर्धमान' इत्यस्य विशेषणम् । ५ 'यत्' इत्यव्ययम् 'यस्मात्'अर्थे । ६ 'न' इति निषेधवाचि अव्ययम् । ७ 'खमण्डली' नदीवत् द्वितीयाबहुवचनम् 'अत्त' इत्यस्य कर्मकारकरूपम् । ८ 'प्रत्यूह' 'वह'धातो प्रतिपूर्वस्य परोक्षाया द्वितीयपुरुषबहुवचनम् । ९ शद्+अ+भ = शलभ इति । १० द्वितीयाया एकवचनम् । 'प्रत्यूह' इत्यस्य कर्मपदम् । ११ कु आयते इति विभाग ।]

व्याख्या–आ लक्ष्मीस्तया न म्लायन्तीति आम्ला इभ्यास्तेषां सम्बोधनम् हे आम्ला इभ्या ! यूयं सिद्धये शिवाय वर्धमानो वर्धमानं जिनम् आख्यान्तीति णिजिः, क्विपि वर्धमानिति नन्तप्रकृतेर्जसि वर्धमान. श्रीवीरजिनवक्तारः स्तोतारः

स्त भवत वर्तध्वे इत्यर्थः । यत् यस्माच्चकारो ग्राह्यः च पुनर्यस्याद् यूयं खमण्डलीः ज्ञानश्रेणीर्न अत्त भक्षयत–न हत इत्यर्थः । अग्रे तच्छब्दग्रहणात् तत् तस्मात् कारणाद् यूय दीप्रदीपवदाचरणं "कर्तुः क्विप्०" [३।४।२५] इति क्विपि, "अंसिप्रत्ययात्" [५।३।१०५] इत्यप्रत्यये, स्त्रीत्वे "आत्" [२।४।१८] इत्यापि दीप्रदीपा प्रदीपवदाचरणं ता प्रत्यूह प्रतिवहथ स्म । प्रतिपूर्वाद् वहेः परोक्षायुष्मदर्थ-बहुवचने "यजादि०" [४।१।७९] इति य्वृति, "द्विर्धातु०" [४।१।१] इति द्वित्वे "समानानाम्०" [१।२।१] इति दीर्घे सिद्धिः । कस्मिन् ? 'शट रुजा-विशरण-गत्य-वसादनेषु' [१७५] इति शटति रुजति इति क्विपि, टस्य डत्वे ड-ल्योरैक्ये शल् जगत्पं डको य आत् कृष्णाद् भवतीति "क्वचित्" [५।१।१७१] डे अभ' काम', तत्य प्लोपे विनाशे । यूयम् किं० कुः स्थानम कस्य ? आयतेर्गौरवस्य ॥५॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥६॥
[सिद्धये[1] [2] । वर्धमानस्तोऽत्ताऽम्ला[3] यन्न[4] ! खमनूडलीः[5] ।
प्रत्यूः शलभः[6] प्लोषेऽदीप्रदीपाङ्कुराय[7] ! ते[8] ॥६॥ ]

[१ सित् प्रथमाया एकवचनम् 'वर्धमान-' इत्यस्य विशेषणम् । २ 'हयि' इत्येवम् इकारान्तस्य शब्दस्य संबेधनैकवचनम् । ३ ताऽत्ताऽम्ला प्रथमाया एकवचनम् 'वर्धमान' इत्यस्य विशेषणम् । ४ इ+अन्न=यन्न ! 'हये' इत्यस्य विशेषणं सवोधनरूपम् । ५ खमण्डली (ख+मन्+ल्ड्+ई) प्रथमाया एकवचनम् 'वर्धमान' इत्यस्य विशेषणम् अत्र 'लड्' इत्यस्य व्यत्यये 'डल्' इति बोध्यम् 'मन्' इति च 'मङ्ग्' धातो बोध्यम् । ६ षष्ठ्या एकवचनम् 'ते' इत्यस्य षष्ठ्यन्तस्य विशेषणम् । ७ अदीप्रन् इति क्रियापदम् । ८ 'ईपाङ्कुराय' इति 'हये' इत्यस्य विशेषणम् सवोधनरूपम् ।]

व्याख्या—सिद्धये-इत्यत्र हये-इति "हयिः काम." [उणादिसू० ६०६] इत्युणादिवचनात् हे हये ! काम !। हे ईपाङ्कुराय । ई लक्ष्मीं स्वजायात्वेन पातीति "आतो ड.०" [५।१।७६]-डे ईपः कृष्णस्तस्य अङ्कुरवत् प्ररोहवदाचरतीति क्यङि, अचि ईपाङ्कुरायस्तस्य-सम्बोधनम् । कामो हि विष्णुपुत्र इति । तथा ई लक्ष्मी सैव अन्नमिव अन्नं जीवनं यस्य स यन्न-तस्य सम्बो० । ते तव प्लोषे दाहे वर्धमानो वीरजिनो अदीप्रत् 'अग्नौ वमिर्दीप्र'[शेषना०देव०ला०प्र० १६६अथवा निर्णय०१७११]इति शेषनिघण्टु-वचनात् दीप्र इवाग्निरिवाचरदित्यर्थः । यतस्ते किम्भूतस्य ? शलभ इव पतङ्ग इवाचरतीति क्यङि क्विपि तल्लोपे "अत" [४।३।७२। इत्यल्लोपे, "य्वो· प्वय्०"[४।४।१२१]इति यल्लोपे च क्रमाः तस्य, "लुगातोऽनाप" [२।१।१०७] इत्यालोपे शलभ । पुनः किं० प्रतिकूलं परस्त्रीगमनादिरूपम् ऊहं तर्कं करोतीति णिजि, क्विपि,तल्लोपे ऊह्, अतः प्रकृते

पठ्यां प्रत्यूहः श्लेषत्वाद् विसर्गाभावः । अन्योऽपि शलभः प्रतिकूलं दीपशिखायां स्वर्णभ्रान्तिरूपम् ऊहं करोति, अग्निना च दह्यते इति । वर्धमान॰ किं० खं आकाशं 'मगु गतौ' [८५] इत्यतो मङ्गति गच्छतीति क्विपि "पदस्य" [२।१।८९] इति गलोपे खमन् पक्षी प्रस्तावाद् हंसः, तद्वत् । 'लड विलासे' [२५४]लडतीति क्विपि लड् सविलासम् । 'ईङ्च् गतौ' [१२५२] ईयते गच्छतीति क्विपि खमण्डलीः कलहंसवत् सविलासगामीत्यर्थः । ल-डयोरैक्याद् व्यत्ययः । पुनः किं० "तस्तु तस्करे"[1] [ ] इत्येकाक्षरवचनात् तश्चौरः, तत्सदृशोऽपि रागोऽपि तस्य । 'अट्टि हिंसाऽतिक्रमयोः' [६७४] इत्यतो हिंसार्थात् क्विपि "पदस्य" [२।१।८९] इति पदान्तलोपे अत् तस्य भावः, भावे तलि अत्ता विदारणं तस्मिन् न म्लायतीति क्विपि ताऽत्ताऽम्लाः । पुनः किं० 'षिधू गत्याम्' [३२०] सेधति जानाति तत्त्वातत्त्वमिति क्विपि सित् तत्त्वज्ञ इत्यर्थः ॥६॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥७॥
[ सिद्धये वर्धमान ! स्तात्[1] ताम्रायन्नख ![2] मं[3] डलीः[4] ।
"प्रत्यूहशलभप्लोषे"[5] दीप्रदीपाङ्कुरा[6] य-ते[7] ॥७॥ ]

[द्वितीयपुरुषैकवचन पञ्चम्या क्रियापदम् अस्'धातो॰ । २ इदं 'वर्धमान' इत्यस्य विशेषणम् संबोधन-एकवचनम् । ३ मं' द्वितीयान्त माम्' इत्यर्थे । ४ ड+ली = डली प्रथमान्तम् एकवचनम् । ५ प्र+अय्+ति=प्रति-ऊह-प्रत्यूह॰ अत्र प्रति प्रकृष्टज्ञानवान् तथा ऊह आत्मा तद्रूपः स एव शलभप्लोष्-शलभप्लोषे चतुर्थ्या एकवचनम् । ६ दीप्रदीपाङ्कुरा प्रथमाया एकवचनम् । ७ इ+अ=य+त=यते सप्तम्या एकवचनम् ।]

व्याख्या—ताम्रा रक्तवर्णा अयन्तः इशब्दादाचारे क्विपि धातुत्वे शतरि कामवदाचरन्तो नखा यस्य स ताम्रायन्नखस्तस्य स॰ । हे वर्धमानजिन ! वीरजिन ! त्वं सिद्धये मोक्षाय मां आचक्षाणो णिजि मदयतीति वाक्ये क्विपि सौ "णेरनिटि" [४।३।८३] इति णिज्लोपे "त्व-मौ प्रत्ययोत्तर॰" [२।१।११] इति मादेशे, परमते सेरमादेशे, "शेषे॰" [२।१।८] इति दलोपे मं मामाचक्षाणो धर्मोपदेशाय स्ताद् भवतादिति सम्बन्धः । यतस्त्वं किं "डः शिवे ध्वनौ"[2] [ ]इत्येकाक्षरवचनात् डः-शब्द.—देशनाध्वनिस्तं लीयसे श्लिष्यसीति क्विपि डलीर्देशनां कुर्वन्नित्यर्थः । पुनः किं० दीप्रो दीपनशीलो यो दीपाङ्कुर प्रदीपस्तद्वद् 'असी गत्यादानयोश्च' [९३२] इति चानुकृष्टदीप्त्यर्थादसतेः, असति दीप्यसे इति क्विपि, सौ "दीर्घङ्याब्॰" [१।४।४५

1 "तकारस्तस्करे"—एकाक्षर॰ सुधा॰ श्लो॰ २३ ।
२ 'डो वृषाङ्के ध्वनावपि'—एकाक्षर॰ सुधा॰ श्लो॰ २१ ।

इति तस्य लोपे, सो रुत्वे, "अवर्ण-भो-भगो०" [१।३।२२] इति लोपे दीप्रदीपाङ्कुराः प्रदीपसदृश इत्यर्थः। कस्मिन्? इः कामस्तथा अः कृष्णस्तयोः समाहारद्वन्द्वे यम् तदेव "तस्तु तस्करे" [ ] इत्येकाक्षरोक्तेस्तस्तस्करस्तस्मिन् य-ते। यथा प्रदीपश्चौरस्य प्रतिकूलस्तथा त्वमपि जगन्मोपकस्य कामस्य, मिथ्यात्वप्रवर्तकस्य विष्णोरपि च प्रतिकूलः। त्वयि तयोः प्रभविष्णुत्वाभावात्। सिद्धये किम्भूतायै? 'अयि गतौ' [७९०] 'गत्यर्था ज्ञानार्थाः' इत्यतः स्त्रियां क्तौ प्रकृष्टा तिर्ज्ञानं यस्यासौ प्रतिर्ज्ञानिम्। 'ऊहि वितर्के' [८७०] इति धातोरचि ऊहो वितर्ककृदात्मेत्यर्थः। स एव शलभान् पतङ्गान् प्लोषति दहतीति विचि शलभप्लोट् प्रदीपो यस्यां सा तस्यां प्रत्यूहशलभप्लोपे। सिद्धौ हि ज्ञानरूपो वियुक्तकर्मा प्रदीपसदृश आत्माऽस्तीति ॥७॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥८॥
[ सिद्धयेवर्धमानस्तौऽऽत्ताऽम्लौऽऽयं नखमण्डलीः।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुराय! ते ॥८॥ ]

[ १ सिद्धयेव् प्रथमाया एकवचनम्। २ अर्धमान् द्वितीयाबहुवचनम् 'नखमण्डली'विशेषणम्। ३ अस्त+आत्त = अस्तात्त। सम्बोधनैकवचनम्। ४ अम्ल! सम्बोधनैकवचनम्। ५ आयम् 'इण्क्'-धातोः ह्यस्तन्या प्रथमपुरुषैकवचनम्। ६ नखमण्डली द्वितीयाबहुवचनम्। ७ दीप्रदीप! सम्बोधनैकवचनम्। ८ अङ्कुराय! सम्बोधनैकवचनम्। ९ 'तव'अर्थसूचक 'ते'रूपम्। ]

व्याख्या—हे अस्तात्त! "असी गत्यादानयोश्च" [९३२] इति गत्यर्थात् क्विपि भावे तलि अस्ता ज्ञानम्, तया आत्त! स्वीकृत!। न म्लायसीति "क्वचित्" [५।१।१७१] डे अम्लस्तस्य स०। प्रत्यूहा विघ्नास्त एव शलभाः पतङ्गास्तेषां प्लोपे दाहे दीप्रदीपस्तस्य सम्बो०। अङ्कुरायसे अङ्कुरवदाचरसि इति अचि अङ्कुरायस्तस्य सम्बो० हे अङ्कुराय! सर्वदैव जरा मरणरहितत्वेन नवीनत्वात् प्रस्तावात् श्रीवर्धमान! ते तव नखमण्डलीर्नखश्रेणी आयम् आश्रितवानित्यर्थः। 'इंण्क् गतौ' [अदादि १७] ह्यस्तन्या अम्वि रूपम् अस्मदर्थत्वादहमिति कर्ता। यतः किंवि० आ समन्तात् ऋद्धः अर्द्धः अर्हं याम्यः सकाशात् ता द्वितीयाशसि समासे एकवचनत्वात् "त्व-मौ प्रत्ययोत्तर०" [२।१।११] इति मादेशे शसो नत्वे अर्द्धमान्। अर्हं किं० सिद्धानां मुक्तानां या या मुक्तिरूपा लक्ष्मीस्तामीप्सतीति क्विपि सौ 'पदस्य' [२।१।८९] इति सलोपे, पस्य वत्वे सिद्धयेव् मुक्तिवाञ्छक इत्यर्थः ॥८॥

---

१ अत्र बहुव्रीहिसमासत्वेन 'ज्ञानवान्' इति उचितम्। २ 'प्रत्यूहशलभप्लोषे' इत्यस्य चतुर्थ्यन्तत्वेन अत्र 'तस्यै' इति उचितम्।

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१॥

[ सिद्धये वर्धमान ! स्तात् ताम्रा यन्नखमण्डलीं ।
प्रत्यूहशलभप्लोषेदी प्रदीपां कुरा यते ! ॥१॥ ]

[१ 'ताम्रास्' इत्यस्य ताम्रा प्रथमैकवचनम् । २ यन्नखम् प्रथमैकवचनम् । ३ अ प्रति डलि तिरस्कारकम् । अम्+ड='अण्ड' इति सन्धि । ४ 'लड्' इत्यस्य लडि, व्यत्यये डलि । ५ डलि+इम्=डलीम् । इ प्रति डलि । ६ प्रत्यूहशल् 'यन्नख' इत्यस्य विशेषणम् । ७ अभप्लोष ! सबोधनैकवचनम् । ८ ईदीप्रदीपा तृतीयैकवचनम् । चित्रकाव्ये सन्तोऽपि अनुस्वार-विसर्गा न गण्यन्ते, असन्तोऽपि ते पूर्यन्ते—इत्येव सर्वत्र बोध्यम् । ९ कुरा 'यन्नख' इत्यस्य विशेषणम् । १० यते ! सबोधनैकवचनम् । ]

व्याख्या—यतिनाथत्वाद् यति. अथवा जितेन्द्रियत्वाद् यतिस्तस्य सम्बो० हे यते ! वर्धमान ! तथा हे अभप्लोष ! अः कृष्णस्तस्माद् भवतीति "क्वचित्" [५।१।१७१] डे अभ· कामस्तं प्लोषसि दहसीति "कर्मणोऽण्" [५।१।७२] इत्यणि अभप्लोष· तस्य सम्बो० । स त्व न· अस्माकं सिद्धये मुक्तये स्तादिति सम्बन्धः । स क· ? इत्याह—जातावेकवचने यन्नखं यस्य नखा इत्यर्थ· । "अः कृष्णे विनतासूनौ" इत्येकाक्षरोक्ते· अं गरुडम्, तथा ईं कामं च प्रति आश्रित्य 'लड जिह्वोन्मन्थने' [१०३६] इति परमते जिह्वा जिह्वाविषया क्रिया उन्मन्थनं चेति अर्थद्वय-पाठात् उन्मन्थने अवश्यं लडयति उन्मथ्नाति तिरस्करोतीति यावत् आवश्यकार्थे "णिन् चावश्यकाधमर्ण्ये" [५।४।३६] इति णिनि, घटादित्वात् ह्रस्वे लडि तिरस्कारि वर्तते इति क्रियाशेष· । ड-लयोरैक्याद् व्यत्यये डलि-इति । कया ? ई पृथिवी तस्या दीप्रा दीपनशीला या दीपनं "कृत्सम्पदा०" [५।३।११४] इति क्विपि ईदीप्रदीप् तया ईदीप्रदीपा—अयमर्थ —यस्य नखा रक्तवर्णत्वात् गरुड काम च तिरस्कुर्वन्ति इत्यर्थ । किम्भूतं यन्नखम् ? ताम्रो रक्तवर्णस्तेन 'असी गत्यादानयोश्च' [९३२] इति चानुकृष्टदीप्त्यर्थाद् असते शोभते इति क्विपि ताम्रा. । पुन कीदृग् ? कुत्सितम् रम् कामम् अस्यन्तीति कुरा । पुन· कीदृग् ? प्रत्यूहान् विघ्नान् 'शठ कैतवे च' [२२२]

१ "जिह्वोन्मन्थनयो इति एके । तन्मतसग्रहार्थं जिह्वाविषया क्रिया उन्मन्थन चेति समाहारोऽपि" —हैमधातुपा० । "अपरे तु जिह्वा च उन्मथनम् इति समाहारद्वन्द्व व्याचक्षते" "जिह्वाशब्देन तद्विषयो व्यापार । वनपालस्तु एव पठित्वा आर्याणा जिह्वा—उन्मथनयो इति पाठ इति"—माधवीया धातुवृत्ति पृ० १३९ ।

इति चानुकृष्टहिंसाऽर्थात् शठति हिनस्तीति क्विपि सौ "धुटस्तृतीय" [२।१।७६] इति ठस्य डत्वे ड-लयोरैक्याल्लत्वे प्रत्यूहशळ विघ्नविघातकमित्यर्थः ॥९॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१०॥
[ सिद्धये वर्धमान ! स्तात् ता[1]ऽम्लायन् न-ख[2]मण्डली ।
प्र[3]त्यूहश ! ल[4]भप्लोषे[5] ! दीप्र[6]दीपांकुर[7]ायते ॥१०॥ ]

[१ ता+अम्लायन्=ताऽम्लायन् प्रथमैकवचनम् 'वर्धमान' इत्यस्य विशेषणम् । २ न+खम् (नश्च खश्च नखम) तस्य मण्डल यस्यास्ति । 'वर्धमान' इत्यस्य विशेषणम । ३ प्रति+इ+ऊ+ह+शोभ्=प्रत्यूहश ! सबोधनैकवचनम । ४ ल+भ+प्र=लभप्र ! सबोधनम् । ५ उ+पा+ई=(बहुव्रीहि-समासे) उपे! सबोधनम् । ६ दीप्रदीप ! सबोधनम् । चित्रकाव्यत्वेन अनुस्वारो निरर्थकोऽपि पूरित । ७ अ+कु=अकु+रायति=(बहुव्रीहिसमासे) अकुरायते ! सबोधनम् ।]

व्याख्या—प्रगता 'अयि गतौ' [७९०] क्तौ तिर्ज्ञानं तत्त्वातत्त्वविवेचनरूपं यस्मात् स प्रतिः । य. इः कामस्तस्य 'अव रक्षण०' [४८९] इति दहनार्थात् "भ्या-दिभ्यो वा" [५।३।११५।] इति क्विपि ऊर्दहन तस्मिन् । "हो निपाते च हस्ते दारुणि शूलिनि" [ ] इत्येकाक्षरोक्तेः हः शिव॰ स इव शोभसे इति "क्वचित्" [५।१।१७१] डे प्रत्यूहशस्तस्य सम्बो० । तथा "ल इन्द्रे चलनेऽपि च" [ ] इत्येका-क्षरनाममालावचनात् लेन इन्द्रेण भातीति "क्वचित्" [५।१।१७१] डे लभः स्वर्ग-स्तं स्वसेवकानां प्राति पूरयति ददातीति यावत् "आतो०" [५।१।७६] डे लभप्र॰ र-लयोरैक्यात् सम्बो० हे लभप्ल ! । तथा उः शिवस्तद्वत् पा श्रेष्ठा जगद्-व्यापिका ई केवलज्ञानलक्ष्मीर्यस्य स समासान्तस्यानित्यत्वात् कजभाव॰ उपे तस्य सम्बो० हे उपे ! "अदेत स्यमो०" [१।४।४४] इति लुक् । तथा दीप्यते इत्येवंशील॰ "स्म्यजस–हिंस-दीप०" [५।२।७९] इति रे दीप्रो दीपनशीलो यो दीपनं घञि दीप कान्तिर्यस्य स तस्य सम्बो० हे दीप्रदीप ! । तथा अकु अकुत्सितो 'रै शब्दे' [८] इत्यन॰ "इ-कित्तिव्०" [५।३।१३८] इति तिव्प्रत्यये रायतिः शब्दो यस्य स तस्य सम्बो० हे अकुरायते ! श्लेषत्वादनुस्वाराभाव॰ । हे वर्धमान ! वीर-जिन ! त्वं सिद्धये अष्टमहासिद्धिभ्य स्तादिति सम्बन्ध अर्थात् सेवकानाम् । त्वं किम्भूत. ? ता चतुस्त्रिंशदतिशयरूपा लक्ष्मीः, तया अम्लायन् न म्लानीभ-वन्नित्यर्थ । पुन॰ किं० "नस्तु संविदि" [ ] इत्येकाक्षरवचनात् नो ज्ञानम्, खानि सौख्यानि, तेषां मण्डलं विद्यते यस्य स न-खमण्डली "अतोऽनेकस्वरात्" [७।२।६] इति इन् ॥१०॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥११॥

[ सिद्धये वर्धमान ! स्तात् ताम्रा यन्नखमण्डलीः ।
प्रत्यूहशलभप्लोऽषे[2] दीप्रदीपाङ्कुरा यते ! ॥११॥ ]

[१ शलभ+प्ल = शलभप्ल । २ 'अष्' धातो उभयपदिन प्रथमपुरुषैकवचनम् ।]

व्याख्या—हे यते ! जितेन्द्रिय ! हे वर्धमान ! वीरजिन ! त्वं सिद्धये 'षिधू गत्याम्' [३२०] 'गत्यार्था ज्ञानार्थाः' इति सेधनं स्त्रियां क्तौ सिद्धिर्ज्ञानं मति-श्रुता-[3]ऽवधि-मनःपर्यय—केवलरूपं पञ्चप्रकारं तस्यै स्ताद् भवेदिति सम्बन्धः । पूर्वार्धे स इति ग्रहणेनोत्तरत्र यन्नखमण्डलीर्यस्य नखश्रेणीरर्थात् पदयोरहम् अषे आश्रये 'अषी असी गत्यादानयोश्च' [९३१] इति गमनार्थादषेर्धातोर्वर्तमानात्मनेपदीयास्मदर्थैकवचने अषे इति रूपम् । नखमण्डली किम्भूता ? दीप्रो दीपनशीलो यो दीपाङ्कुरस्तद्वद् ई लक्ष्मीः शोभा यासां ताः दीप्रदीपाङ्कुराः । अत एव किम्भूताः ? ताम्रा रक्ताः । यतोऽहं कथम्भूत ? प्रत्यूहा विघ्नास्त एव शलभाः पतङ्गास्तेभ्यः 'प्लुङ् गतौ' [५९८] इति धातोः प्लवे गच्छामि नश्यामि 'क्वचित्' [५।१।१७१] डे "डित्यन्त्य०" [२।१।११४] इति अन्त्यस्वरादिलोपे प्रत्यूहशलभप्लः । यथा प्रदीपः शलभान् हन्ति, तथैता अपि मम विघ्नान् हनिष्यन्तीति अभिप्रायेण संश्रये इत्यर्थः ॥११॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१२॥

[ सिद्धये वर्धमान ! स्तात् ताम्रा[1] यत् नखमण्डलीं[2] ।
प्रत्यूहं[3] शलभप्लोऽ[4]षेदी[5]प्रदीपां[6] कुराय[7] ते ॥१२॥ ]

[१ ताम्र+अस्=ताम्रास्=ताम्रा प्रथमैकवचनम् । २ मण्डली+ईम्=मण्डलीम् । अत्रत्यम् 'ईम्' पदम् 'अषेत्' इत्यस्य कर्मरूपम् । अनुस्वारो न गण्य पूर्ववत् । ३ 'निरन्तरम्' इत्यर्थे क्रियाविशेषणम् । ४ शल्+अभप्र = शलभप्ल—प्रथमैकवचनम् । ५ 'अषेत्' क्रियापदम् । ६ ईप्रदीपाम् द्वितीयान्तम् 'अषेत्' इत्यस्य कर्म । ७ 'कुराय' तथा 'ते'—तुभ्यम्—चतुर्थ्यन्तम् ।]

व्याख्या—हे वर्धमान । वीर ! । त्वं सिद्धये 'षिधू गत्याम्' [३२०] इति धातोः क्तौ सिद्धिर्गतिः सद्गतिस्तस्यै स्तादिति सटङ्कः । त्वं किम्भूतः ? सुवर्ण-

---

१ अत्र 'तद्वद् ई' इति पाठे दीप्रदीपाङ्कुर+ई='दीप्रदीपाङ्कुरे' इति स्यात्, नैतद् इष्टम् । अतः 'दीप्रदीपाङ्कुरा' इति निष्पादनाय 'तद्वद् आ' इति पाठ समुचित । "पूजायामपि माङ्गल्ये आकारश्च"—[एकाक्षरको० श्लो० १] इति वचनात् अर्थस्यापि सुसागत्यम् । ततश्च दीप्र-दीपाङ्कुर+आ=दीप्रदीपाङ्कुरा इति भवेत् ।

वर्णत्वात् ताम्रो रक्तवर्णस्तद्वद् असंसि शोभसे क्विपि ताम्राः यत्कारणात् 'संघाते कुष्टभेदे च' [हैं० अने० श्लो० १२७५] इत्यनेकार्थवचनात मण्डलं कुष्टम् तद् विद्यते यस्य स मण्डली नखं यावन्मण्डली नखमण्डली कुष्ठवानपि जनस्ते तुभ्यम् ऊहमूहं प्रति प्रत्यूहं निरन्तरम् । 'शट रुजा-विशरण-गत्यवसादनेषु' [१७५] इति गत्यर्थात् शट्धातो शटति आश्रयतीति क्विपि "धुटस्तृतीय" [२।१।७६] इति डत्वे, ड-लयोरैक्याल्लत्वे प्रत्यूहशल् नित्यं समाश्रयन् मण्डलीति ईकारप्रश्लेपात् ई लक्ष्मी शोभाम्—इत्यर्थः—अपेत् प्राप्नुयात् । ईम् किम्भूताम् ? ई पृथ्वी ता प्राति पूरयति 'क्वचित्" [५।१।१७१] डे ईप्र. भुवि प्रसरन ।·दीपनं घञि दीप· कान्तिर्यस्याः सा ईप्रदीपा तां भूमिविस्तारकान्तिमतीमित्यर्थ । ते कथम्भूताय ? कुत्सितो निष्प्रभावत्वान्निःश्रीको र· कामो यस्मात् स कुरस्तस्मै कुराय । जन· किं० न विद्यते भा शोभा येषां ते अभा मूर्खास्तेषु विषये 'प्लुषग् स्नेहन सेचन-पूरणेषु'[१५६२] इति स्नेहार्थात् प्लुष."क्वचित्"[५।१।१७१] डे अभप्लोऽपि मूर्खप्रियोऽपि । अपि. अध्याह्रियते ॥१२॥

इति द्वादशार्य्या श्रीवर्धमानं जिन वर्णयित्वा तस्यैव जगद्गुरोर्जनकं सिद्धार्थनृपं वर्णयति ।

तथाहि—

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१३॥**
**[ सिद्ध ! ये[1] वर्ध[2] मानस्तात्ताम्ला[3] यन्नखमण्डलो[4] ।**
**प्रत्यूशलभप्लोषे दीप्रदीप ! अङ्कुरा[5] यते[6] ॥१३॥]**

[१ 'य' पदस्य सप्तम्या एकवचनम् । २ द्वितीयपुरुषैकवचनम् पञ्चम्या क्रियापदम् । ३ मानस्ता+अत्ता+म्ला प्रथमैकवचनम् । ४ ई+अन्न=यन्न+ख+मण्डल—तत मत्वर्थीय इन् । ५ अङ्कुरा प्रथमैकवचनम् । ६ 'यत' पदस्य सप्तम्या एकवचनम् । ]

व्याख्या—हे सिद्ध ! 'स्याद् भीमो भीमसेन ' इतिवत् "ते लुग् वा"[३।२।१०८] इत्युत्तरपदलोपात् हे सिद्धार्थनृप ! । दीप्र· केवलश्रिया दीप्यमानो दीप इव त्रिभुवनभवनप्रकाशकत्वाद् दीप श्रीवीरजिन पुत्रतया यस्य स दीप्रदीपस्तस्य सम्बो० हे दीप्रदीप ! त्वम् । 'वृधूङ् वृद्धौ'[९५७]इति धातोरात्मनेपदस्यानित्यत्वात् पञ्चम्या हौ वर्ध धन-धान्यादिना कीर्ति-महिमाऽऽदिना च वर्धमानो भव । त्वं किम्भूत· ? मनस्ता मनोलक्ष्मीः मन·कर्म वा, तत्र भवा भवार्थेऽणि मानस्ती-मानसी या । 'अट्टि हिंसाऽतिक्रमयोः' [६७४]इति धातो क्विपि अत्, भावे तलि अत्ता हिंसा तस्या· कारणविषये

म्लायति अतत्परीभवति क्विपि मानस्तात्ताम्ला' । पुनः किं०² ई श्रीः अन्नं धान्यम् ताभ्यां खमिव एवं स्वर्गतुल्यं मण्डलं देशो विद्यते यस्य स यन्नखमण्डली "अतोऽनेकस्वरात्"[७।२।६]इति इन् । पुन किं०² "अङ्कुरं सलिले रोम्णि"[ ]इत्यनेकार्थवचनाद् अङ्कुरै रोमोद्गमैः अमति शोभते क्विपि अङकुरा' सरोमाञ्च्:—सहर्ष इत्यर्थः । कस्मिन्² यते व्रते सयमे इत्यर्थः, आसन्नसिद्धिकत्वाच्चारित्राभिलाषीत्यर्थ । यते किं०² "यस्तु मातरिश्वनि" [ ]इत्येकाक्षरवचनात् य इव यो वातस्तस्मिन् ये वातसमाने इत्यर्थ. । कस्मिन् ² प्रत्यूहा विघ्नास्त एव "शरं जले"[ ]इत्यनेकार्थवचनात् र-लयोरैक्यात् शरैर्जलैर्भान्तीति"क्वचित्" [५।१।१७१] डे शलभा मेघास्तेषां प्लोषे विनाशे ॥१३॥

अथ तस्यैव विभो सवित्रीं त्रिशलां वर्णयति—

तथा—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते-॥१४॥
[सिद्धये वर्धमानस्ताऽत्ता म्लायं नः खमण्डलीः ।
प्रत्यूहशलभः प्लोषेदीप्रदीपां कुराऽऽयते· ॥१४॥]

[१ सिद्धये ! श्रीत्रिशलामातु सबोधनैकवचनम । २ वर्धमानस्ता+अत्ता+म्लायम् । वर्धमानस्ता इति 'वर्धमानस्तन्' शब्दस्य प्रथमैकवचनम् श्रीत्रिशलामातु विशेषणम् । ३ अत्ता तथैव । ४ म्लायं द्वितीयैकवचनम् 'प्लोष' इति क्रियाया कर्म। ५ न षष्ठीवहुवचनम्। ६ ख+मण्ड+ली–ई =खमण्डली प्रथमैकवचनम् श्रीत्रिशलामातु विशेषणम्। ७ प्रत्यूहश+लभ्=प्रत्यूहशलभ श्रीत्रिशलामातु विशेषणम् षष्ठ्या एकवचनम्। ८ प्लोष–इत्–ई=प्लोषेदी । अत्र प्लोष इति द्वितीयपुरुषैकवचनम् पञ्चम्या क्रियापदम् इत् प्रथमैकवचनम् ई विस्तारसूचकम् ९ प्रदीपाम् षष्ठीवहुवचनम् । १० कुरा प्रथमैकवचनम् । ]

व्याख्या–सिद्धं सिद्धार्थनृपं याति गच्छति भजते इत्यर्थ' । 'आतो डः० "[५।१।७६]इति डे सिद्धया त्रिशला तस्या सम्बो० हे सिद्धये ! त्रिशले ! त्वं नखेत्यत्र चित्रत्वाद्द विसर्गलोपे नोऽस्माकं म्लानमिति"भावाकर्त्रो घञ्" [५।३।१८] इति घञि म्लायो म्लानिस्तं प्लोष भस्मीकुरु इत्यर्थ' । त्वं किं ² वर्धमानजिनं चरमतीर्थकर स्वपुत्रतया स्तनति वक्ति क्विपि सौ " नि दीर्घ "[१।४।८५]इति दीर्घे वर्धमानस्ता । त्वं किम्० ² अत्ता इव अत्ता मातृसदृशी अर्थाज्जगताम्— जगद्बन्धो श्रीवीरस्य माता–जगन्मातैव । 'अत्ता' शब्दो मातृपर्यायो लक्षणबृहद्वृत्तौ, "नित्यदिद्-द्विस्वरा०"[१।४।४३]इति⁴ अम्वार्थोदाहरणे दर्शितत्वात् ।पुन किं ² खं मुखम् तेन यो

१ "यस्तु वाते यमेऽपि च" एकाक्षर०सुधा० श्लोक ३५ । २ सूत्र तु "भावाऽकर्त्रो" इत्येव, परतु लिखितपुस्तिकाया यथा लिखित तथा अत्र स्वीकृतम् । ३ लक्षणबृहद्वृत्तौ–सूत्रबृहद्वृत्तौ । ४ इति सूत्रे ।

मण्डो भूषा तं लीयसे श्लिष्यसि इति क्विपि खमण्डली: । पुन' किम्० ? 'ञिइन्धैप् दीप्तौ' [१४९८] इति धातो' क्विपि इत् देदीप्यमाना। कुतः ? ओर्विस्तारात् । कासाम् ? प्रदीपनं प्रदीप' "क्रुत्सम्पदादिभ्य'०" [५।३।११४] इति क्विपि आमि प्रदीपां कान्तीना प्रदीपाम् आयते' । किम्भूताया' ? प्रत्यूहान् विघ्नान् श्यति प्रत्यूहश' जिन, तस्य लभां प्राप्तिं करोतीति णिजि, क्विपि प्रत्यूहशलप् तस्या' प्रत्यूहशलभ । पुन किम्० ? त्वं ई इव लक्ष्मीरिव जगत्सुखहेतुत्वात् । पुनः किम्० ? कुत्सितो निः-श्रीको र' कामो यस्या सकाशात् कुरा ॥१४॥

अथ तस्यैव विभो' प्रथमगणधरं श्रीगौतमं वर्णयति—तथा—

सिद्धये वर्धमानः स्तात् ताम्रा यन्न ! खमण्डली ।
प्रत्यूहशलभप्लोषे दीप्तप्रदीपाङ्कुरायते ॥१५॥

[सिद्धये वर्धमानेस्त्ताऽऽत्ताऽऽम्राः यन्न ! खमण्डली ।
प्रत्यूहशलभप्लोपेदीप्रदीपां कुराः यंते ! ॥१५॥]

[१ वर्धमानस्त! 'हे गौतम!' इत्येवम् अध्याहृतसंबोधनस्य विशेषणम् । २ आत्ताम्रा -आत्त+आम्र+ अस्=आत्ताम्रा गौतमस्य विशेषण प्रथमैकवचनम् । ३ यन्न!—ई+अन्न=यन्न! पूर्ववत् संबोधनरूप विशेषणम् । ४ ख+मण्डल+इन्=खमण्डली 'आत्ताम्रा' इत्यस्य विशेषणम् । ५ प्रत्यूहशलभप्लोपेत्— प्रत्यू+ऊह+शल्+अभ+प्लोष+इन्=प्रत्यूहशलभप्लोषेत् । ०प्लोपेत्+ईप्रदीपाम्=प्लोपेदीप्रदीपाम् अत्र प्रत्यूहशलभप्लोपेत् इति प्रथमान्तम् एकवचनम् । ईप्रदीपाम् षष्ठीवहुवचनम् । ६ कुरा प्रथमैकवचनम् 'कुरास्' इत्यस्य । ७ संबोधनैकवचनम् । ]

व्याख्या—वर्धमानं वीरजिनं स्वगुरुतया स्तौतीति "क्वचित्" [५।१।१७१] डे डित्यन्त्यस्वरादिलोपे वर्धमानस्त' तस्य सम्बो० हे वर्धमानस्त ! गौतम ! हे यते ! जितेन्द्रिय ! त्वं सिद्धये उपलक्षणत्वादष्टमहासिद्धयस्ताभ्य' स्तादिति क्रिया गृह्यते। त्वं किम्० ? आत्तोऽङ्गीकृतो य. आम्र सहकारवृक्षस्तद्वद् अससि शोभसे क्विपि आत्ताम्रा । यथा श्रित आम्रस्तापापनोदको भवति तथा त्वमपीत्यर्थ । पुन' किम्० ? " आ विधातरि मन्मथे" [ ]इत्यनेकार्थवचनात् आ ब्रह्मा तस्यापत्यं स्त्री अणि "अवर्णेवर्णस्य" [७।४।६८] इति आलोपे डीप्रत्यये ई सरस्वती तस्या अन्नमिवान्नं जीवनभूतस्तस्य सम्बो० हे अन्न ! खं ज्ञानम् केवलज्ञानं तदेव मण्डलं कटक-वलयाद्या-भरणविशेषो यस्य स अन्नखमण्डली "अतोऽनेकस्वरात्" [१७।२।६]इन् ।पुन' किं० ?

१ यार्विस्तारात् इति उचितम्—प्लोष+इत्+ई=प्लोषेदी इत्यस्य साधनाय । २ षष्ठीवहुवचने ।

प्रतिपूर्वाद् अवतेर्हिंसार्थान् "भ्यादिभ्यो"वा[५।३।११५] इति[1] प्रत्यूः हिंसा तस्या ऊहं वितर्कमपि 'शट रुजा०' [१७५]इति रुजार्थात् शटेः शटति रुजति पीडयतीति क्विपि "धुटस्तृतीयः" [२।१।७६] इति टस्य डत्वे ड–लयोरैक्याल्लत्वे प्रत्यूहशल् । पुनः किं ? आत् विष्णोर्भवतीते "क्वचित्" । [५।१।७१] डे अभः कामस्त प्लोषति "कर्मण०" [५।१।७२।] अणि अभप्लोषी[2] कामविनाशिका[3] 'इण्क् गतौ' [अदादिग० १७] इति भावे क्विपि इत् ज्ञानं यस्य स अभप्लोषेत् । पुनः किं ? कु पृथ्वीं राति ददाति कुरा पृथ्वीदाता । केषाम् ? ई लक्ष्मीं प्रदीपयन्ति सप्तक्षेत्रीनिवेशनेन इति कर्तरि क्विपि ईप्रदीपस्तेषाम् ईप्रदीपां धनिनाम्–श्राद्धानाम् ॥१५॥

अथ तस्यैव विभोर्भ्रातरं **नन्दिवर्धनाख्यं** भूपं वर्णयति–

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१६॥**

**[सिद्धये वर्धमानः[1] स्तात् ताम्रा[2] यन्नखमण्डली[3] ।**
**प्रत्यूहशल[4]भप्लोषेदीप्रदी[5] पाङ्कुरा[6] यतेः[7] ॥१६॥]**

[१ वर्धमा+न=वर्धमान । एतत् पदम् प्रथमैकवचनम् 'नन्दिवर्धन' नामसूचकम् । २ ताम्र+ अस्=ताम्रा +अन्न० अत्र "रोर्यः"[१।३।२६] इति सूत्रेण रो यत्वे ताम्रायन्न० इति । अत्र ताम्रा इति प्रथमैकवचनम् । ३ अन्न+ख+मण्डल० तत यन्नखमण्डली। प्रथमैकवचनम् । ४ प्रति+ऊ=प्रत्यू +हन्=प्रत्यूहन्+शर =प्रत्यूहशर प्रत्यूहशल प्रथमैकवचनम् । ५ भ+प्र+उषा+इत्=भप्रोषेत्=भप्लोषेत् +ई+प्रदी=भप्लोषेदीप्रदी प्रथमैकवचनम् । ६ प+अङ्कुर+अस्=पाङ्कुरा प्रथमैकवचनम् । "प पाने पवने पथि"–एकाक्षर० सुधा० श्लो०३१ । ७ यता+ई=यते=यते प्रथमैकवचनम् ।]

व्याख्या–'वर्ध' इत्यक्षरसमुदायम् । 'मीण् मतौ' [३७७ चुरादिगतयुजादि] "गतौ[4] अपि" अन्ये । णिचि मायति य आश्रयति क्विपि णिजूलोपे "य्वोः प्वय्०" [४।४।१२१] इति यस्य लोपे वर्धमा वर्धशब्दमाश्रितो यो नो नकारो नाम्नि यस्य स वर्धमानः एतावता[5] वर्धन "ते लुग् वा" [३।२।१०८] इति पूर्वपदलोपाद् वर्धनो नन्दिवर्धनो नाम राजा सिद्धये सेवकानां कार्यनिष्पत्तये स्ताद् भवत्विति सम्बन्धः ।

---

१ इति' क्विप्' प्रत्यये । २ 'कर्मण अण्' इति सूत्रेण अभप्लोष इत्येव स्यात् नहि अभप्लोषी तथा 'अभप्लोषी' इति पदम् अत्र न साधकम् किन्तु 'अभप्लोष' इत्येव पद साधकम् तेनैव 'अभप्लोषेत्' इति सिध्यति । ३ गौतमस्य विशेषणत्वेन कामविनाशक इति उचितम् । ४ "मी गतौ" [२८३ चुरादि] माधवीयधातुवृत्तौ पृ० ३९५ । ५ एतावता प्रकारेण 'वर्धन-पदस्य निष्पत्ति इति भाव ।

किम्भूत' ? ताम्रस्योपलक्षणत्वात् सुवर्णाद्यपि ताम्रं तेन 'असी गत्यादानयोश्च' [४३२] इति 'असति'धातोर्दीप्त्यर्थाद् असति शोभते क्विपि ताम्रा' । पुन' किम्भू० ? अन्नं धान्यं तेन खं मुखं 'गुणशब्दा गुणिन्यपि वर्तन्ते' इति मुखवन्मण्डलं देशो विद्यते यस्य स "अतोऽनेकस्वरात्" [७।२।६] इति इनि अन्नखमण्डली। पुनः कि० ? प्रतिपूर्वादवतेर्हिंसाऽर्थात् कर्तरि क्विपि वस्य ऊटि प्रत्यू' पापी तमेव घ्नन्ति क्विपि प्रत्यूहनो र-लयोरैक्यात् शला बाणा यस्य स प्रे०लः । तथा भैर्नक्षत्रैरुपलक्षित' प्रकृष्टो य उषायां रात्रौ एति गच्छति क्विपि "ह्रस्वस्य०" [४।४।११३] इति तागमे उपेत् चन्द्रस्तद्वदाह्लादका ई लक्ष्मी प्रददति "उपसर्गादातो ड'०" [५।१।५६] इति डे ईप्रदा दातारो विद्यन्ते यस्य स "अतोऽनेक०" [७।२।६] इति इनि भप्लोपे दीप्रदी पश्चाद विशेषणसमासे प्रत्यूहशलभप्लोपेदीप्रदी किं० 'पस्तु पातरि पवने' इत्येकाक्षरवचनात् पो वायुस्तेन युतं यदङ्कुर जलं तद्वदसति भाति क्विपि पाङ्कुरा' यथा वातलहरीमिश्रं जलं सुखकृत् तथाऽयमपि प्रणतनराणां सुखकृदित्यर्थ । किं० यता वशीकृता ई पृथ्वी येन स यते अनित्यत्वात् कजभावे "गोश्चान्ते०" [२।४।९६] इति ह्रस्वे एकार' ॥१६॥

अथ सकलमङ्गलावलीवल्लिपल्लवननवजलधरायमाणान् चतुर्विंशतिजिनान् स्वस्वनामाकर्षणपूर्वं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१७॥

[सिद्धये वे[1]र्धमा नै[2]: स्तात् तौ[3]ऽम्रायन्नै[4]खमण्डली ।
प्रे[5]त्यूहशल ! भे[6]प्लोपेदीप्रे[7]! दोर्षां[8] कुैरायते:[9][10] ॥१७]

[१ वा+ऋधमा न =वर्धमा न । अत्र 'वा' निश्चयसूचकम् अव्ययम् । ऋधमा ' इति प्रथमैकवचनम् । ऋकारयुक्त इत्यर्थ । २ 'न ' इति षष्ठीबहुवचनम । ३ ता+अम्लायन् ताऽम्लायन्=ताम्रायन् प्रथमैकवचनम् ४ अ+ख+मण्डली=अखमण्डली इति प्रथमैकवचनम् । अत्र 'अ' निषेधसूचक । यन्+अख० अत्र "ह्रस्वात् ङ-णनो द्वे" [१।३।२७] इति द्वित्वे यन्नख० इति । ५ प्रत्यूह+श= प्रत्यूहश+ल=प्रत्यूहशल ! सबोधनैकवचनम् । ६ भ+प्लो+प+इत्=भप्लोपेत्—भकार—षकारयुक्त इत्यर्थ । 'ऋधमा' पदेन ऋकारयुक्त- अनेन च पदेन भकार—षकारयुक्त अर्थात् 'ऋषभ ' इत्यर्थ । ७ ०षेत्+ईप्र=प्लोपेदीप्र ! 'ईप्र' इति सबोधनैकवचनम् । ८ षष्ठीबहुवचम् । ९ कु आयते इति विभाग । १० पञ्चयन्तम् ।]

---

१ 'प्रत्यूहशल ' इति सपूर्ण पदम् ।

व्याख्या-ई लक्ष्मीस्तां प्राति पूरयति भक्तानामिति "आतो डोऽह्वा०" [५।१।७६। इति डे हे ईप्र ! तथा प्रत्यूहा' प्रतिकूलास्तान् श्यति व्यपनयति इति "आतो डो०" [५।१।७६] इति डे प्रत्यूहशः। "ल इन्द्रे चलनेऽपि च" [ ] इत्येकाक्षरवचनात् लो गमनं यस्य तस्य सम्बो० हे प्रत्यूहशल ! वा एवार्थे त्वं न' अस्माकं सिद्धये मुक्तये स्तात् भवतादेवेत्यर्थ। सामान्याभिधाने नामादिविशेषमाह–त्वं किं० ऋकारं दधाति "आतो डो०" [५।१।७६] इति डे ऋधः। ऋकारयुक्तः 'माङ्क् मान–शब्दयो.' [११३७] इति धातोः शब्दार्थात् क्विपि मा. वाचको यस्य स ऋधमा'। पुन. किं० भं भकारं प्लवते गच्छति विचि भप्लौः गमनस्याद्यग्रयो. सम्भवाद् गताग्रभृकारं षं षकार 'इणक् गतौ' [१०७५] एति गच्छति क्विपि "ह्रस्वस्य०" [४।४।११३] इति तागमे भप्लोषेत् एतावता ऋषभ. ऋषभाभिध इत्यर्थः। पुनः किं० ता लक्ष्मी' अर्थात् केवलज्ञानरूपा तया न म्लायति शतरि ताऽम्लायन् कैवल्यलक्ष्मीनिर्मल इत्यर्थ'। पुनः किं० खानि इन्द्रियाणि चक्षुरादीनि, तद्ग्राह्याः शब्द-रूपादयोऽपि खानि, तेषां मण्डलं समूहो विद्यते यस्य सखमण्डली, पश्चान्नञ्योगे अखमण्डली जितेन्द्रिय-विषय इत्यर्थः। पुनः किं० कुः स्थानम् कासाम् ? दीपां कान्तीनाम्–"आयतिः प्रभावोत्तर-कालयोः" [हैम०अने०त्रिस्वर० श्लो०८४६] इत्यनेकार्थवचनात्–आयतेः प्रभावस्य च॥१७॥

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१८॥**
**[सिद्धयेवर्धमानस् ! तात्ताऽम्लायं न खमण्ड ! लीः।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुराय ते ॥१८॥]**

[१ सिध् + धय = सिद्धय–'सिध्'शब्दधारक। २ उ+अ+र्=वर्। ई+वर्=ईवर्+धम+अस्=ईवर्धमास्+न+अस्=ईवर्धमानस् (अत्र 'वर्धमास् + न्' इत्यवस्थाया स रत्वे "अवर्णभो०" [१।३।२२] इति सूत्रेण तस्य लोपो विधेय) तत सिद्धय+ई+वर्धमानस्=सिद्धयेवर्धमानस् इति सबोधनैकवचनम् – सिन्धुरराजित! इत्यर्थ। ३ ताऽऽत्त! सबोधनैकवचनम्। ४ अम्लायम्–ह्यस्तन्या अस्मत्पुरुषैकवचन क्रियापदम्। ५ न निषेधवाची। ६ ख + मण्ड = खमण्ड!। ७ ली आश्रयधारक प्रथमैकवचनम्। ८ ते तुभ्यम्।]

व्याख्या–सिध् इति वर्णद्वयम्। 'धिंत् धारणे' [१३३०] इति धातो धियति धत्ते इत्यचि गुणेऽयादेशे सिद्धयः। तथा 'ईङ्च् गतौ' [१२५२] क्विपि ईर्गच्छन्

१ "लकार चलने पुन"–एकाक्षर० सुधा० श्लो० ३८। २ सिध धियति इति सिद्धय अर्थात् 'सि' वर्णधारक।

उकार. अकारयुक्त' र्-रकारश्च यस्य स ईवर् पश्चाद् विशेषणसमासे सिद्धयेवर् । एतावता सिधुर इति सिद्धम् । ईदृशो यो 'ध्मां शब्दा-ऽग्निसयोगयो.' [४] इति धातो. "घ्रा-ध्मा-पा०" [५ । १ । ५८] इति शे ' श्रौति-कृवु-धिवु०" [४ । २ । १०८ ] इति धमादेशे धमो वाचकस्तं असति आदत्ते क्विपि सिद्धयेवर्धमाः न् नकारो यस्य एतावता सिन्धुरो गजस्तेन लाञ्छनभूतेन असति शोभते क्विपि सिद्धये-वर्धमान तस्य सम्बो० हे सिद्धयेवर्धमान ! हे अजित ! हे ताऽऽत्त ! तथा चतुस्त्रिंश-दतिशयलक्ष्म्याऽङ्गीकृत ! खं ज्ञान तदेव मण्डनं मण्डो भूषा यस्य तस्य सम्बो० हे खमण्ड ! अहं ते तुभ्यं 'लीङ्च् श्लेषणे' [१२४८] इति.क्विपि लीः आश्रयन् न अम्लायम् न म्लानोऽभवम् इत्यर्थ. । तुभ्यं किं० प्रति प्रतिकूलम् ऊहन्ते अचि प्रत्यूहा मिथ्यादृशस्त एव शलभा' पतङ्गास्तेषां प्लोषे विनाशे दीप्रदीपाङ्कुराय दीप्यमान-दीपसदृशाय ॥१८॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥१९॥
[ सिद्धये वर्धमा[1] नः[2] स्तात् ताम्राः[3] यं[4] नखम्[5] अण्[6] डलीः[7] ।
प्रत्यूह[8] ! शलभ[10] प्लोषेदी[11] प्रदीपां[12] कुरायते[13][14] ॥१९॥ ]

[१ व+ऋध+मा =वर्धमा —वकारयुक्त इत्यर्थ —प्रथमैकवचनम् । २ न अस्माकम् । ३ ताम्र+अस्=ताम्रा.—ताम्रास्—इत्यस्य प्रथमैकवचनम् । ४ यम् द्वितीयैकवचनम्—यं प्रति—इत्यर्थ' । ५ नखम्—प्रथमैकवचनम्—'म्'वर्णयुक्त इत्यर्थ. । ६ अण्—सर्वज्ञ —प्रथमैकवचनम् । ७ डली —देशनाध्वनियुक्त —प्रथमैकवचनम् । ८ प्रति 'यम्' इति पदेन सवद्धम् । ९ ऊह ! ऊ+ह=हिंसात्यागी—इत्यस्य संबोधनम् । १० शलभ शकार-भकारयुक्त -प्रथमैकवचनम् । दशम--प्रथम-पञ्चमटिप्पणोक्त-प्रकारेण 'शभव ' इत्यर्थो लभ्यते । ११ प्र+ऊष+ड+दी=प्रोषेदी=प्लोषेदी—कामक्षयकारी । १२ षष्ठीवहुवचनम् । १३ कु प्रथमैकवचनम् । १४ आयते 'अय्'धातो आङ्युक्तस्य तृतीयपुरुषैकवचनम ]

व्याख्या—' अव रक्षण०' [४८९] इति हिंसार्थाद् अव् "भ्यादिभ्यो वा" [५ । ३ । ११५] इति क्विपि ऊर्हिंसा ता 'ओहांक् त्यागे' [११३१] जहाति त्यजति सर्वाभयदत्वात् इति "आतो ड ०" [५ । १ । ७६] इति डे ऊहस्तस्य सम्बो० हे ऊह ' त्वं न अस्माक 'षिधौ शास्त्र-माङ्गल्ययो ' [३२१] इति सिद्धये माङ्गल्यकृते स्ताद भव इति क्रिया-कारकसम्बन्ध । सामान्याभिधाने विशेषमाह—त्वं किं० शकारं 'लाक् आदान (ने)' [१०६८] लाति "आतो ड ०" [५ । १ । ७६] इति डे शलो भो भकारो यस्य नाम्नि स शलभ । चित्रत्वाद् विसर्गलोप । पुनः

कि० वकारेण ऋद्धो 'माङ्क् मान-शब्दयो.' [११३७] मिमीते मा वाचको यस्य स वर्धमाः । पुनः किं० 'उख नख०' [६४] इति नखधातोः अचि नखो गच्छन् म् मकारो यस्य स नखम् एतावता शम्भवः शम्भवाभिध इत्यर्थः । तथा 'अगु गतौ' [८३] 'गत्यर्थाः ज्ञानार्था.' इति अङ्गति जानाति सर्वं क्विपि अन् अग्रे डकारे सति "तवर्गस्य श्चवर्ग०" [१ । ३ । ६०] इति सूत्रेण णत्वम् । तथा पीत-रक्तयोरैक्यात् कान्त्या ताम्रं धातुविशेषस्तद्वद् आचरति "क्यङ्" [३ । ४ । २६] इति क्यङि क्विपि यो लोपे ताम्रा । पुनः किं० "ड शिवे ध्वनौ" [ ] इत्येकाक्षरवचनान् डं देशनाध्वनिस्तं लीयते क्विपि डलीः । यं त्वां प्रति प्रदीपां कान्तीनां कु. शिवश्रीः आयते आगच्छति, अत्र आङ्पूर्वः 'अयि गतौ' [७९०] इति धातुः । किम्भूता ? प्रकर्षेण ऊषति रुजति जगत् "नाम्युपान्त्य०" [५ । १ । ५४] इति के प्लोषो यः इ. कामः तं दीयते क्षयं नयति प्लोषेदी चित्रकाव्यत्वाद् विसर्गभावाभावो न दोषपोषाय । यमित्यस्य पूर्वार्धस्थितस्यापि उत्तरार्धे ग्रहणं श्लेषसंश्लेषतो न दोषाय जायते ॥१९॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥२०॥
[सिद्धये [1] वर्धमा [2] नः [3] स्तात्ताऽऽम्राः [4] यन् [5] न [6] खमण्डली ।
प्रत्यूह-शलभ [7] प्लो [8] षेदीप्रदीपाङ्कुराय [9] ! ते [10] ॥२०॥]

[१ अत्र 'स्तात्' इति क्रिया अध्याहार्या अर्थात् सिद्धये स्तात् भवतु इति । २ वर्+ध+मा=वर्धमा अर्थात् 'वर्' इति वर्णद्वयधारक । ३न अस्माकम् । ४ स्ता+आत्त+आम्+रा=स्तात्ताम्रा अर्थात् 'साम्' इति पदधारक । ५ यन् इ+अन्=यन्-इवर्णधारक 'यन्' इति प्रथमैकवचनम् । चतुर्थ-द्वितीय-पञ्चमटिप्पणोक्तप्रकारेण 'सावरि' इति पद निष्पद्यते-सवरस्य अपत्यम् सावरि अभिनन्दन इति। ६ नखमण्डली+इम्=नखमण्डलीम् तत चित्रकाव्ये नखमण्डली । अत्र 'इम्' इति द्वितीयान्तम् । ७ प्रत्यूह+शल+भस्=प्रत्यूह-शलभस्-विघ्न-हिंसयो भर्त्सनकारी। प्लोषेत् इति क्रियापदम् । ९ ईप्रदीपाकुराय ! सवोधनैकवचनम् । १० तव इति ।]

व्याख्या-'ईङ्च् गतौ' [१२५२] अयन ई ज्ञानम् तेन प्रदीपायते प्रदीप इवाचरतीति क्विपि प्रदीपा[1] । तथा अनुस्वारशब्दवाच्य परं ब्रह्म, तस्य कु स्थानं शिवरूपं य. तस्य । 'रांक्, दाने' [१०६९] "आदानेऽपि" केचिदिति राति अङ्गीकरोति "तन्व्यधीण्०" [५ । १ । ६४] इति णे "आत ऐः०"[४ । ३ । ५३] इति वृद्धौ राय तस्य सम्बो० हे ईप्रदीपांकुराय ! हे जिन ! त्वं न अस्माकं 'षिधू शास्त्र-माङ्गल्ययो' [३२१] इति सेधनं सिद्धिर्माङ्गल्य तस्यै भव इति क्रिया-

१-'ईप्रदीपा इति युक्तम् ।

शेषः । सामान्याभिधाने अभिधानादिविशेषमाह—त्व किं० स् सकारस्य ता लक्ष्मीः स्ता तया आत्तं अङ्गीकृतम् । आम् इति वर्णद्वयं 'रांक् दाने' [१०६९] राति लाति क्विपि स्तात्ताम्रा· एतावता साम् इति सिद्धम् । पुनः किं० 'वर्' इति वर्णद्वयं दधाति "आतो डः०" [५ । १ । ७६] इति डे वर्धो मा वाचको यस्य स वर्धमाः, एतावता सांवर इति सिद्धम् । पुनः किं० इकारं 'अगु रगु गतौ' [८३] इति धातोः अङ्गतीति वाक्ये क्विपि सौ "पदस्य" [२ । १ । ८९] इति गलोपे यन्-एतावता सांवरिः सवरस्य राज्ञोऽपत्यं अभिनन्दन इत्यर्थः । पुनः कि०प्रत्यूहा विघ्नाः 'शृग् हिंसायाम्' [१५३१] "युवर्ण-वृ-द-वश०" [५ । ३ । २८] इति अलि र-लयोरैक्यात् शलो हिंसा ताम् 'भस् भर्त्सन–दीप्त्योः' [५३१] इति लक्षणबृहद्वृत्तौ "उणादयः" [५ । २ । ९३] इति सूत्रदर्शितात् परैर्जुहोत्यादिपठिताद् 'बभस्ति' इति वाक्ये प्रत्यूहशलभः, श्लेषाद् विसर्गलोप । यस्य ते तव नखमण्डली इं कामं प्लोषेत् दहेत् इमिति मण्डलीत्यत्र इकारप्रश्लेषात् 'नानुस्वार–विसर्गौ च' इति अनुस्वारलोपः ॥२०॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदी पाङ्कुरायते ॥२१॥

[सिद्धये वर्धमाः[1] नः[2] स्ताऽत्ता[3] म्ला यन्[4] नखमण्डलीः[5] ।
प्रत्यूहशलभप्लोऽ[6]षे[7] दीप्रदीपां[8] कुलाय[9] ते[10] ॥२१॥]

[१ उ+अर्ध+म्+आ+अस्=वर्धमा ! संबोधनैकवचनम् । अनया स्वरव्यञ्जनसयोजन–युक्त्या 'सुम्' इति जातम् । २ षष्ठीबहुवचनम् । ३ स्त+अत्ता=स्तात्ता ! इति संबोधनम् । अनेन पूर्वेण 'सुम्' पदेन 'अत्' इति वर्णद्वयस्य सयोजने 'सुमत्' इति । ४ यन् ! सबोधनम् अर्थात् 'इ'कारयुक्त अत 'सुमत्' पदेन सह अन्ते 'इ'सयोजने 'सुमति' इति जातम् । अत हे सुमते! इति भाव । ५ अखमण्डली –'यन्+अख०' इति स्थितौ 'न्'व्यञ्जनस्य द्वित्वे 'यन्नख' इति । अख+मण्ड+ली –अखमण्डली । ६ प्रत्यूह+शय्+लभप्ल । अत्र चित्रकाव्यत्वेन 'य्' न गण्यते अत प्रत्यूहशलभप्ल प्रथमैकवचनम् । ७ 'अषे' इति 'अष्' धातो अहंकर्तृकम् क्रियापदम । ८ षष्ठीबहुवचनम 'दीप्रदीप्'शब्दस्य । ९ कुलाय चतुर्थीविभक्ति । १० ते 'तव' इत्यर्थ ।]

व्याख्या—स्कारं 'तयि णयि' [७९७]इति गत्यर्थात् तयेः तयते इति विचि "य्वोः प्वय्०" [४ । ४ । १२१] इति यलोपे हे स्त ! तथा उ अर्धे अगे यस्य स वर्धः ईदृशो यो म् मकारस्तेन आ समन्ताद् असति शोभते क्विपि वर्धमाः तस्य सम्बो० हे वर्धमा ! एतावता 'सुम्' इति सिद्धम् । तथा अत् इति वर्णद्वयं 'तायृङ् सन्तान-पालनयो [८०६] तायते पालयति क्विपि अत्ता, तस्य सम्बो० हे अत्ता !

'सुमत्' इति सिद्धम् । तथा इं इकारं गच्छेति ङेङ्गति क्विपि यन् तस्य सम्बो० हे यन्! एतावता सुमति इति सिद्धम्, सम्बोधने हे सुमते! अहं ते तुभ्यम् अपे आश्रये इत्यर्थः । कस्यै? सिद्धये मुक्तये । केषाम्? न. अस्माकमेव । 'अर्पी असी गत्यादानयोश्च' [९३१] इति अपेर्धातोर्वर्तमानात्मनेपदीयास्मदर्थैकवचने रूपसिद्धिः । अहं किं०? म्लायामि क्विपि म्लाः कर्मार्दितत्वात् म्लानीभवन्नित्यर्थः । अत एव अखानि दुःखानि तान्येव मण्डो भक्तादिरसाग्र्यम् तद् 'लीण् द्रवीकरणे' [१९४२] युजादिविकल्पितणिच्त्वात् णिचोऽभावे लयति द्रवीकरोति व्यपनयति क्विपि अखमण्डली. । पुनः कि० प्रत्यूहानां विघ्नानां शय स्वापो लक्षणया विनाश. तं करोति णिजि क्विपि सौ "य्वो०" [४ । ४ । १२१] इति यलोपे प्रत्यूहशय् । पुन किं० 'ल इन्द्रे चलनेऽपि च" [ ] इत्येकाक्षरोक्ते. लेन इन्द्रेण भाति "क्वचित्" ५ । १ । १७१] डे लभः स्वर्गस्तं प्लवते गच्छति "क्वचित्" [५ । १ । १७१] डे लभप्ल. । ते किं० र-लयोरैक्यात् कुलाय गृहाय । कासाम्? दीप्रदीपां दीप्रकान्तीनाम् ॥२१॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥२२॥
['सिद्धैयेवर्धमा नैस्तात् ताऽम्ला यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥२२॥]

[१ 'सित्' प्रथमैकवचनम् । २ धया+इव+र्+व+मा =धयेवर्धमा अर्थात् अनेन स्वर-व्यञ्जनसयोजनप्रकारेण 'धारि' इति जातम्–धरस्य नृपस्य अपत्यम् पद्मप्रभजिन इत्यर्थः । ३ नस्+ता+अत्=नस्तात् प्रथमैकवचनम् । ४ ता+म्ला+अस् ताम्ला अत्र 'अस्' धातु दिवादि-गणस्य । नस्+तात्+ताम्ला =नस्तात्ताम्रा इति । ४ प्र+दय्+ति=प्रत्ति+ऊ+ह–प्रत्यूह । ५ प्र+उष= प्रोष अत्र'उष् रुजायाम्' धातु । प्रोषे='प्लोषे सप्तमी । ६ 'दीप्रदीप+अकु+र' तस्मात् क्यङि दीप्रदीपाकुरायते । चित्रकाव्यत्वेन अनुस्वारवृद्धौ दीप्रदीपाङ्कुरायते ।]

व्याख्या–धकारं याति "आतो ड.०" [५।१।७६] इति डे धय आकारो यस्मिन् स धया । तथा इकारं 'वन षन भक्तौ' [३२९] वनति सेवते इति विचि तल्लोपे इवा ईदृशं र् इति रकार धत्ते "आतो ड०" [५ । १ । ७६ ] इति डे

१ अत्र 'यन्' इति पदसाधनाय ग्रन्थकारेण 'ड'पदेन सह 'ङ्ग'धातो क्विबन्तम 'इन्' इति रूप योजितम् परतु अनया प्रक्रियया 'ङिन्' इति सेत्स्यति न 'यन्' इति, अत अत्र 'यन्' पदसाधनाय एषा प्रक्रिया नोचिता । या उचिता सा इयम्–'अञ्ज्' धातो क्विपि 'अन्' इति पद जायते अस्य 'अन्' इति पदस्य 'इ' पदेन सधौ यन्' इति पद साधयितु सुकरम् अत अत्र पाठे 'इङ्गति' स्थाने 'अङ्गति' इति समुचितम ।

इवर्ध । पश्चाद् विशेषणसमासे धयेवर्धो मा वाचको यस्य स धयेवर्धमा । एतावता धारि—धरस्य राज्ञोऽपत्य पद्मप्रभजिन । 'षिधू गत्याम्' [३२०] सेधनि जानाति तत्त्वं क्विपि सित त्रिजगत्ज्ञाता तत्त्वातत्त्वविद् अस्तीति क्रियाविशेष । कि० 'णसि कौटिल्ये [८५१] नसते क्विपि न तस्य भावे तलि नस्ता कौटिल्यं माया इति यावत्, ता अनि विनाशयति क्विपि नस्तात् कौटिल्यमुक्त इत्यर्थ । पुन कि० १ ता चतुस्त्रिंशदतिशयलक्ष्मी तया आम्लान "उपसर्गादात" [५ । ३ ।११०] इति अप्रत्यये आम्लां म्लानिम् अस्यति क्विपि ताम्ला । उत्तरार्धे यच्छब्द पूर्वार्धे तच्छब्दं द्योतयति । स क ? इत्याह—यन्नखमण्डली यस्य नखश्रेणी प्रपूर्वात् 'दयि दान-गति-हिंसा०' [७९९] इति रक्षणार्थाद् दयते क्तौ "य्वो प्वय्०"[४ । ४ । १२१] इति यलोपे परमते "अत" [४ । ३ । ८२] इति अलोपे "अघोषे प्रथमः०" [१ । ३ । ५०] इति तत्त्वे प्रत्तिर्दया तस्या करोत्यर्थाद् अवे क्विपि ऊटि ऊ करणं ताम् । 'ओहांक् त्यागे' [११३१] इति जहाति "आतो ड०" [५ । १ । ७६] इति डे प्रत्यूहो निर्दय स एव शलभ तस्य प्रकर्षेण 'उष रुजायाम्' [५०४] इति उषण घञि प्रोषः पीडा दहनमित्यर्थ तस्मिन् दीप्रा दीप्यमाना या दीपनं घञि दीपा कान्तिचाकचक्यानि तै अकु अकुत्सितो य "रैस्तीक्ष्णे वैश्वानरे कामे" [ ] इत्येकाक्षरवचनात् र अग्निस्तद्वदाचरति "क्यङ्" [३ । ४ । २६] इति क्यङि दीर्घश्चेति दीप्रदीपाकुरायते श्लेषादनुस्वारलोप ॥२२॥

सिद्धये वर्धमानः स्तात् ताम्ना यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥२३॥
[सिद्धयेवर्धमा[२]! नः[३] स्तात्ताम्नायन्[४] ! नखमण्डली[५] ! ।
प्रत्यूहशलभ[६] ! प्लोषेदीप्रदीपाऽकुरायते[७][८] ॥२३॥]

[१ स+इद्ध+या+इ=सिद्धये इति एकारान्त पदम् अर्थात् 'स'युक्त । २ व++ऋद्ध+मा=वर्धमा इति आकारान्त पदम अर्थात् 'व'युक्त । आभ्या पदाभ्याम् 'स्व' इति जातम् । सिद्धये-वर्धमा ! इति सबोधनैकवचनम् । ३ न षष्ठी । ४ स्त+आत्त+अ+म्ला+इ+अङ्ग्=स्तात्ताऽम्लायन् ! सबोधनैकवचनम । 'इ+अङ्ग्' इत्यस्य सधौ 'यङ्ग्' तत यन् । 'म्ला' इत्यस्य 'म्रा' उच्चारणम् । अनेन पदेन 'स्ति' इति जातम् तत पूर्वेण 'स्व'पदेन 'स्ति'पदस्य सयोजने 'स्वस्ति' इति जातम । ५ अ+ख+मण्ड+ली=अखमण्डली ! सबोधनैकवचनम । काव्ये विसर्गविहीनम उच्चारणम । ०यन्+अख०' इत्यस्य संधौ 'यन्नख' इति । ६ प्र+त्ति=प्रत्ति+ऊह+शर+भा+प्रत्त्यूहशरभ ! सबोधनैकवचनम । 'र'स्य 'ल'उच्चारणे ०शलभ इति । ७ प्र+उषा+इ=प्रोषे इति 'कामदेव' सूचकम् एकारान्त पदम । प्रोषेदीप्रदीप ! इति सबोधनैकवचनम् । ८ अ+क्+उर् ! =अकुर ! अर्थात्

१ दकारस्य नकारे जाते । २ "र कामे तीक्ष्णे वैश्वानरे"—एकाक्षर० सुधा०श्लो० ३६ ।

'क'वर्णयुक्ता । पूर्वेण 'स्वस्ति'पदेन 'क'स्य सयोगे 'स्वस्तिक' इति निष्पन्नम् । ९ आ+यत= आयत=द्वितीयपुरुषैकवचनम् पञ्चम्याम् क्रियापदम् । १० °न +इम् तेम् । 'म्' कारस्य अनुच्चारणे 'ते' इति । ]

व्याख्या—स् इद्धां दीप्तां यां लक्ष्मीम् ईयते गच्छति क्विपि सिद्धये' यो वकारस्तेन ऋद्धो मा वाचको यस्य स सिद्धयेवर्धमा' तस्य सम्बो० हे सिद्धये-वर्धमाः ! एतावता 'स् व' इति सिद्धम् । तथा स्त इति वर्णद्वयेनात्तो गृहीत सन् न म्लायति क्विपि स्तात्ताम्ला य इकारस्तम् अञ्चति गच्छति क्विपि सौ "पद-स्य" [२ । १ ८९] इति गलोपे हे स्तात्ताम्लायन् ! । अधुना 'स्वस्ति' इति सिद्धम् । तथा अकारेण युक्तं ककारं उरो मुख्यं करोति णिजि "त्र्यन्त्यस्वर०" [७ । ४ । ४३] इति 'अस्'लोपे उरयतीति अचि अकुरस्तस्य सम्वो० हे अकुर ! । एता-वता स्वस्तिक इति सिद्धम् । अथ स्वस्तिकवन्मङ्गलहेतुत्वाद् रक्तवर्णत्वाच्च **श्रीसु-पार्श्व**जिनोऽपि स्वस्तिकः । अथवा स्वस्तिकलाञ्छनाद् धार्य धारकयोरभेदोपचारात् अथवा स्वस्तिको विद्यते यस्य लाञ्छने इति "अभ्रादिभ्य" [७ । २ । ४६] इति 'अ'प्रत्यये स्वस्तिकस्तस्य सम्बो० हे सुपार्श्व ! त्वं न अस्माकं इ कामं आयत निरा-कुर्या' । 'आयत' इति आङ्पूर्वात् 'यतण् निकारोपस्कारयो' [१७३८] इति धातो-र्णिचोऽनित्यत्वात् णिचोऽभावे पञ्चम्या हौ रूपसिद्धि । उषां बाणपुत्रीं स्वकलत्रं 'ईङ्च् गतौ [१२५२] ईयते कामार्थं गच्छति क्विपि उषे अनिरुद्ध. बल-रूपादिना प्रकृष्ट' उपेः प्लोषेः तद्वद् दीप्रो दीपन दीपः कान्तिर्यस्य तस्य सम्बो० प्रोपेदीप्रदीप ! । हे प्रत्यूहशलभ ! प्रपूर्वाद् हिंसाऽर्थाद् दयते' क्तौ "य्वौ' प्वय्०" [४ । ४ । १२१] इति यस्य लोपे परमते "अत" [४ । ३ । ८२] इति अल्लोपे "अघोपे प्रथमोऽ-शिट." [१ । ३ । ५०] इति तत्त्वे प्रत्तिर्हिंसा तस्या ऊह' विचार 'शॄश् हिंसायाम्' [१५३१] शृणाति अचि प्रत्यूहशरा— र-लयोरैक्यात्— प्रत्यूहशला भा कान्तिर्यस्य स तस्य सम्बो० । तथा हे अखमण्डली ! खानि इन्द्रियाणि चक्षुरादीनि तेषां मण्डनं मण्डो अञ्जनादिना आभरणादिना च अलङ्करण त लीयसे श्लिष्यसि क्विपि खमण्डली. पश्चात् नञ्योगे अखमण्डली ॥२३॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥२४॥

[ 'सिद्धयेवर्धमा ! नं स्तात् ? ताम्रां ! यन्नख-मण्डली ।
प्रत्यूहशल ! भप्लोऽपेदीप्रदीपाङ्कुरायं ! ते[10] ॥२४॥]

[१ सित् जाता—प्रथमैकवचनम् । २ हयेव् ! सबोधनैकवचनम् । ह्+अय+ईप्=हयेव् अनेन प्रकारेण 'हि'शब्दो निष्पन्न । ३ अर्धमा । अर्ध+मा=अर्धमा । अनेन प्रकारेण 'मा' शब्द साधित । मा+हि='माहि' इति जातम् । महस्य अपत्य माहि । हयेव्+अर्धमा =हयेवर्धमा । सित्+हयेवर्धमा =सिद्धयेवर्धमा +न =सिद्धयेवर्धमान । 'व'कारस्य 'व'त्वनो सिद्धयेवर्धमान ।४ अत्र 'न' इत्यस्य विसर्गो न उच्चारणीय तत 'न' इति निषेधवाचकम् बोध्यम् । तस्य 'स्तात्' क्रियया सवन्वे काक्वा प्रश्नविवक्षायाम् न स्तात् अपि तु 'स्तात् एव' इति अर्थसगति ।५ ताम्रायते इति ताम्रा । ६ अन्नख—अन्न+खाद्=अन्नख+मण्डली=अन्नखमण्डली । ताम्रास्+अन्नख० अत्र स रुत्वे तस्य च पूर्वोक्तप्रकारेण 'य'त्वे ताम्रा यन्नख० । ७ प्रत्यूह-शर ! रस्य लत्वनो प्रत्यूहशल !। ८ भप्लोषे—भ+प्र+उ—भप्रो । 'र'स्य लत्वनो भप्लो इति ओकारान्तम् । अषे न ष अष तस्मिन् अषे सप्तम्यन्तम् भप्लो+अषे=भप्लोऽषे=भप्लोषे इति, अत्र 'भप्लो' इति 'अषे' इत्यस्य विशेषणम्। ९ भप्लोषे दीप्रदीपाङ्कुराय ! । १० तव ।]

व्याख्या—अर्धं मा इति माकारो यस्य स अर्धमाः । एतावता मा इति सिद्धम् । तथा हकारम् अयते अचि हयो य इ' इकारस्तं ईप्सतीति क्विपि सौ "पदस्य" [२ । १ । ८९] इति 'स'लोपे "धुटस्तृतीय" [२ । १ । ७६] इति वत्वे ब—वयोरैक्यात् वत्वे हे हयेव् !। एतावता 'माहि' इति सिद्धम् । "ते लुग् वा" [३ । २ । १०८] इत्युत्तरपदलोपात् महो महसेनभूपः तस्यापत्यं "अत इञ्" [६। १। ३१] इति इञि वृद्धौ माहिस्तस्य सम्बो० हे माहे !**चन्द्रप्रभ** !। हे प्रत्यूहशर ! प्रत्यूहा विघ्ना' तेषां विषये शर इव बाण इव प्रत्यूहशरस्तस्य सम्बो० ।तथा हे भप्लोषे दीप्रदीपाङ्कुराय ! 'भस् भर्त्सन-दीप्त्यो' [माधवीयधातु०तृतीयगण धा०१८]इति परपठितधातोः क्विपि भ' सन्तापकः प्रकृष्ट उ' शिवो यस्य स भप्लो' श्लेषाद् विसर्गलोपः र—लोरैक्याल्लत्वम् ।ईदृश "षे श्रेष्ठे"[ ] इति एकाक्षरवचनात् अषोऽश्रेष्ठो यः कामः स एव "अग्नौ वर्मिर्दीप्र "[हैमशेषनाममालाश्लो०१७११]इति शेषवचनाद् दीप्रोऽग्नि. तस्य दीपनं घञि दीप' कान्तिस्तस्मिन्। "अङ्कुरं सलिले" [ ] इत्यनेकार्थवचनाद् अङ्कुरं जलं तद्वदाचरतीति क्यङि अचि भप्लोषेदीप्रदीपाङ्कुरायस्तस्य सम्बो० । हे ताम्रा ! ताम्रः धातुविशेषस्तद्वदाचरतीति क्यङि क्विपि "य्वो प्वय्०" [४ । ४ । १२१] इति यस्य लोपे ताम्रा पीत-रक्तयोरैक्यात् सुवर्णवर्ण इत्यर्थ । अन्न धान्यं तदेव खादति भक्षयति "क्वचित्" [५ । १ । १७१] डे अन्नखो धान्यभोक्ता न तु मांसादिभोक्ता य' । "समूहे कुष्ठभेदे हि शुनि मण्डले"[2] [ ] इत्यनेकार्थवचनात् मण्डला श्वानो विद्यन्ते यस्य स मण्डली व्याध "अतोऽनेकस्वराद्" [७ । २ । ६] इति इन्, अन्नखश्चासौ मण्डली च अन्नखमण्डली ते तव 'षिधू गत्याम्' [३२०] सेधति इति क्विपि

१—"ष कीर्तितो बुधैः श्रेष्ठे"—एकाक्षरकोषे श्लो० ३४।२ मण्डलो बिम्ब-देशयो ॥१२७४॥ भुजङ्गभेदे परिधौ शुनि द्वादशराजके । सघाते कुष्ठभेदे च ॥१२७५॥ हैम—अनेकार्थ० ।

सित् ज्ञाता । न स्तात् ? अपि तु स्तादेव । अयमर्थः तवोपदेशादिना मुक्तमांसादिभक्षणो व्याधोऽपि तत्त्वज्ञाता स्तादेव ॥२४॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥२५॥
[ [1]सिद्धये[2]वर्धमाऽ[3]नस्तात् ! [4]ताम्रायन्नख ! [5]मण्डली ।
[6]प्रत्यूहशलभप्लोषे [7]दीप्रदीपाङ्कुराऽऽयते[8] ॥२५॥ ]

[१ हे सिद्धय ! सिद्ध+या=बहुव्रीहिसमासे सिद्धय ! संबोधनैकवचनम् । २ इवर्धम ! सिद्धय+इवर्धम=सिद्धयेवर्धम ! सबोधनैकवचनम् । इ+व्+अर्+ध्+अम=इवर्धम ! अनेन पदेन 'विधि' शब्द निष्पन्न· सुविधिजिननामद्योतक । ३ अनस्तात् संबोधनैकवचनम् । अ+नस्+ता+अत्=अनस्तात् अनस्ता अकौटिल्यम्–ऋजुता–अकपटभाव –सरलता इति यावत् । ४ ताम्+रै+शतृ=ताम्रायत् +नख=ताम्रायन्नख ! । ५ मण्डली प्रथमैकवचनम् । ६ प्र+तय्+ति=प्रत्ति+अव्=ऊ=प्रत्यू+ह=प्रत्यूह-शलभप्लोषे सप्तम्या एकवचनम् । ७ दीप्रदीपाङ्कुर इति क्रियापदम् द्वितीयपुरुषैकवचनम् पञ्चम्या 'हि'प्रत्यये । एतत् क्रियापदम् हैम० ३।४।२५। इति सूत्रेत आचारार्थद्योतक'क्विप्'प्रत्ययान्तम् । ८ 'इ'शब्देन 'कामदेव'वाचकेन इदमर्थद्योतकतद्धितप्रत्यये आय+ति=आयति–सबोधनैकवचने आयते ! ]

व्याख्या—न विद्यते र् यस्मिन् स अर्, स चासौ ध् च अर्-ध् । व् च अर्-ध् च वर्धौ, इकारेण युक्तौ च तौ वर्धौ च इवर्धौ । 'अम् शब्द-भक्त्योः' [२९१] इति अमति वक्ति अचि अमो वाचकः, इवर्धौ अमो वाचको यस्य स इवर्धम एतावता 'विधि' इति सिद्धम् । "ते लुग् वा" [३ । २ । १०८] इति पूर्वपद-लोपाद् उपसर्गस्याऽतन्त्रत्वाद् वा तस्य सम्बो० इवर्धम ! हे सुविधे ! हे सिद्धय ! [1]सि० शाश्वती मुक्तिरूपा या लक्ष्मीर्यस्य तस्य सम्बो० । तथा हे अनस्तात् ! 'णसि कौटिल्ये' [८५१] क्विपि नस्, भावे तलि नस्ता कौटिल्यं नञ्योगे अनस्ता अकौटिल्यं तेन 'अत् सातत्यगमने' [२७९] अतति विहरति जगति क्विपि अनस्तात् तस्य सबो० । हे ताम्रायन्नख ! ताम्रं रक्तं करोति णिजि क्विपि "पदस्य" [२ । १ । ८९] इति 'र'लोपे ताम् अत एव रैः सुवर्णं तद्वदाचरतीति क्विपि शतरि रायन् नखो यस्य स ताम्रायन्नखस्तस्य सबो० । हे आयते ! इ. कामस्त-स्येयं "तस्येदम्" [६ । ३ । १६०] अणि आयी निर्गमनं यस्मात् स आय-तिस्तस्य संबो० । त्वं प्रपूर्वात् 'तयि णयि रक्षणे च' [७९७] इति चकाराकृष्टगत्य-र्थात् तयते· क्तौ "य्वोः प्वय्०" [४ । ४ । १२१] इति यलोपे "अत"

१- 'सिद्धा' इत्यस्य 'सि०' इति संक्षिप्तम् तेन 'सि० सिद्धा शाश्वती' इत्यादि योज्यम् ।

[४ । ३ । ८२] इत्यन्लोपे, गत्यर्थानां ज्ञानार्थत्वेन प्रैत्तिः प्रतिपत्तिर्ज्ञानं तत्त्वातत्त्वविचारस्ताम् । 'अव रक्षण०' [४८९] इति हिंसाऽर्थादवते. अवति हिनस्ति कर्तरि क्विपि "मव्यवि०" [४ । १ । १०९] इत्युपान्त्येनोटि ऊर्हिंसको यः—"हो[२] हस्ते दारुणि शूलिनि" [ ] इति एकाक्षरवचनात्—हः शिव' तस्य शासनमपि उपचारात् हः स एव शलभ' पतङ्गस्तस्य प्लोपे विनाशे दीप्रो दीपाङ्कुरः प्रदीपः तद्वदाचर क्विपि हौ दीप्रदीपाङ्कुर । त्वं किं० मण्डलं बिम्बं विद्यते यस्य स "अतोऽनेकस्वरात्" [७ । २ । ६] इति मण्डली सूर्य मण्डलीव मण्डली जगत्प्रकाशकत्वात् ॥२५॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥२६॥
[[१]सिद्धयेऽ[२]वर्धमानस्ता[३]त्ता[४] [५]म्रायन्नखमण्डलीः ।
[६]प्रत्यूहशल ! [७]भप्लो[८]ऽ[९]पेदीप्र[१०]दीपाऽकुरा [११]यते ॥२६॥]

[१ सिद्ध+या=सिद्धय, तत सप्तम्या एकवचने सिद्धये । २ अ+वर्धमान अवर्धमान । ३ 'त' शब्दस्य पञ्चम्या एकवचनम् । ४ 'ताय्' धातो—क्विबन्तं कृदन्तं नाम—ता प्रथमैकवचनम् । ५ म्लायत्+नखमण्डली+ङे —म्लायन्नखमण्डली । लस्य 'र' ध्वनौ विसर्गस्यागणने च म्रायन्नखमण्डली ता+म्रायन्न० ताम्रायन्न० । 'ता' इति भिन्न पदम् । ६ प्र+त्+ई+ऊह+श्=प्रत्यूहश्, अनेन शीतलजिनद्योतकम् 'शीत्' इति पद निष्पन्नम् । प्रत्यूहश्+अल=प्रत्यूहशल, अनेन सपूर्णं 'शीतल इति नाम सजातम् । प्रत्यूहशल ! सबोधनैकवचनम् । ७ भ+भा=भप्—प्रथमैकवचनम् । ८ ल प्रथमैकवचनम । ९ 'अपेत्' इति क्रियापदम । १० ई+प्र+दी+इ+प+अ+कु+रास्=ईप्रदीपाकुरा' प्रथमैकवचनम् । सानुस्वारस्य उच्चारणे प्रदीपाकुरा प्रत्यूहशल+भप्+ल=प्रत्यूहशलभप्ल इति अत्र त्रीणि पदानि, तत्र उपान्त्यम् अन्त्य च 'भप्' इति 'ल' इति च प्रथमान्तम् । प्रत्यूहशल+भप्+ल+अपेत् एतेषा सयोगे प्रत्यूहशलभप्लोपे इति ज्ञेयम् । तत 'अपेत्' इत्यस्य अन्त्य 'त्' इत्यस्य 'ईप्रदीप०' इति पदेन संयुक्तीकरणे प्रत्यूहशलभप्ल +अपेत्+ईप्रदीप०=प्रत्यूहशलभप्लोपेदीप्रदीप० तत 'अकुरा' इत्यनेन सयोगे समग्र जायते । ११ यते व्रते ]

व्याख्या—प्रगत त तकारोऽग्रे यस्य स प्रत् ईदृशश्चासौ ईकारश्च प्रती. सज्ञाशब्दत्वात् तृतीयो (दकार) न भवति । एव सर्वत्र । तस्य ऊहो स्थापनविचारोऽग्रे यस्य स प्रत्यूहः स चासौ श् च प्रत्यूहश्—एतावता 'शीत्' इति सिद्धम् । ईदृशं 'अल' इत्यक्षरद्वयं यस्य स प्रत्यूहशल —एतावता 'शीतलः' इति सिद्धम् तस्य सं० हे प्रत्यूहशल ! शीतल ! भवान् यते व्रते अपेद् गच्छति व्रतमङ्गीकरोतीत्यर्थ । त्वं पुन' किं० अवर्ध. अवर्धिष्णु मान अहङ्कारो यस्मात् स अवर्धमान' । पुन' किं० 'तायृङ् सन्तान—पालनयोः' [८०६] इति, अत क्विपि "य्वो प्वय्०" [४ । ४ । १२१] इति 'य्'लोपे ता रक्षक कस्मात् "त तस्करे क्रोडे" [ ]इति तः तस्करः तस्मात्

१ ग्रन्थकारेण अय शब्दो न दर्शित । २ "ह शूलिनि करे वीरे" इत्यादि—एकाक्षर० सुधा० श्लो० ९५ । ३ क्रियापदम् ।

तात् । पुनः किं० ? म्लायन्ती मुक्त्यनाप्त्या खिद्यमाना "नख' करज-षण्ढयोः" [हैम० अनेकार्थ० द्विस्वर० श्लो० ३८] इति अनेकार्थवचनात् नखानां तृतीयप्रकृतीनां मण्डली श्रेणिर्यस्या. सा म्लायन्नखमण्डली समासान्तविधेरनित्यत्वात कजभावः ईदृशी ईः शासनरूपा लक्ष्मीर्यस्य स म्लायन्नखमण्डली' । नपुंसकाना हि जिनमते मुक्तिर्नोक्ता । त्वं किं० भा भ्रमरास्तद्वद् भान्ति [1]गौचर्यामिति "क्वचित्" [५ । १ । १७१] डे भभाः यतिनस्तानाख्यातीति णिजि क्विपि सौ "धुटस्तृतीयः" [ २ । १ । ७६ ] इति विरामविवक्षितत्वात् पत्वे भप् तत्त्वातत्त्वकथनाय साधूनाम् आख्याता । अथवा भः शुक्रः कौशलेन तद्वद् भान्ति डे भभा विद्वांस . तानाख्यान्तीति पूर्ववदेव । पुनः किं० ल इव इन्द्र इव लः । पुनः किं० ईम् लक्ष्मीं प्रददाति क्विपि "ईर्व्यञ्जने०" [४ । ३ । ९७ ] इति परमते ईकारे ईप्रदीः । तथा इम् कामं 'पै शोषणे' (४७) इति पायति शोषयति डे इपः । तथा न कुत्सितं रासते शब्दायते क्विपि अकुराः पश्चाद् विशेषणसमासे ईप्रदीपाकुरा. । यते कि० सिद्धा सम्पन्ना या लक्ष्मीर्यस्मात् तत् सिद्ध्र्यं तस्मिन् सिद्ध्रये ॥२६॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीपदीपाङ्कुरायते ॥२७॥
[ [1]सिद्धये[2]वर्धमा [3]नः [4]स्तात् [5]ताम्रा [6]यन्नख ! [7]मण्डली ।
[8]प्रत्यूह ! [9]शल ! [10]भः [11]प्लोपे [12]दीपदीपाङ्कुरायते ॥२७॥ ]

[१ सिद्ध प्रसिद्ध प्रथमैकवचनम् । २ एवर्धमा ! सबोधनैकवचनम् । अनेन पदेन 'रे' इति निष्पन्नम् । सिद्ध +एवर्धमा =सिद्धयेवर्धमा । अत्र "रोर्य" [१।३।२६] इति सूत्रेण यत्वे कृते सिद्धयेवर्धमा इति जायते । ग्रन्थकारेण तु नैषा प्रक्रिया प्रदर्शिता । ३ न षष्ठी । ४ स्तात् क्रियापदम् । ५ तम्+र्=तम्र-ताम्र+अस्=ताम्रा प्रथमैकवचनम । ६ यन्नख ! यत्+नख=यन्नख सबोधनैकवचनम् । अनेन पदेन 'यत्' इति निष्पद्यते । ७ मण्डली–भामण्डलवान् प्रथमा । ८ प्रति+ऊ+ह–प्रत्यूह ! सबोधनैकवचनम् । ग्रन्थकारेण 'प्रत्यूह' पदसाधनाय 'प्रति+ऊहन+ह' इति प्रक्रिया प्रदर्शिता परन्तु तथा तु 'प्रत्यूहनह' इति सेत्स्यति, 'प्रत्यूह' पद न सेत्स्यति अत 'प्रत्यूह' पदसाधनाय इयम् अन्या प्रक्रिया समुचिता–प्रति+ऊ+ह=प्रत्यूह, अत्र 'ऊ' पद रोषवाचकम् तत शिववत् काम प्रति रोषकारी एवम् अर्थसौकर्यमपि भवति । "ऊ प्रश्ने रोषवाचि च" [ हैम० अनं० अव्यय० श्लो० १७७३ ] चित्रकाव्ये 'ऊ' इत्यस्य 'ऊ' उच्चारणम् । ९ श्+अल+अ=शल ! सबोधनैकवचनम् अनेन पदेन 'श्' इति उपपन्नम । एवम्

१ अत्र 'गोचर्याम्' इति उचितम् । २ अत्र 'आख्याति' इति उचितम् । ३ "सस्या' शब्दात् अन्यत्र लुप्तव्यञ्जनेऽपि इच्छन्ति एके । तथा च जयकुमार 'पा पाने' इत्यस्य क्विपि पी इत्याह"–अस्य सूत्रस्य सिद्धहेमलघुन्यासे ।

'शल[illegible]' एषा गणोक्ते 'श्रेयन्' इति [illegible] । १० [illegible], [illegible]गस्य अगणनं 'भप्लोषे' इति । ११ 'प्लोषे'—[illegible] । १२ दीप्रदीपाङ्कुर ; [illegible] । १३ [illegible]यते षष्ठ्या एकवचनम् । [illegible] 'दीप्रदीपाङ्कुर' [illegible] दीप्रदीपाङ्कुरायते ।]

व्याख्या—शकारस्य 'अली भूषण-पर्या०' [९१९] इति भूषणार्थस्य [illegible] भूपति अचि शलस्तस्य स० हे शल ! । एतावता 'श' इति सिद्धम् । तथा एकारं 'वांक् गति'०[१०६३]इत्यतो वाति "धातो ड०" [५ । १ । ७६] इति डे वो यो ; रकार, तं दधातीति "क्वचित्" [५ । १ । १७१] डे एकारो मा तात्वो यस्य स एवर्धमा, तस्य सम्बो० । एतावता 'श्रे' इति सिद्धम् । तथा यत उत्त[illegible]यम् 'उख नख०' [६४] इत्यतो नखति गच्छति अचि यन्न[illegible]स्तस्य स० । एतावता 'श्रेयत्' इति सिद्धम् । "श्रेयान् श्रेयांस" [अभि० नाममा० कां० १ श्लो० २९] इति मालावचनात् श्रेयान् श्रेयांस । सम्बोधने हे श्रेयन् ! श्रेयांसजिन ! त्वं नः अस्माकम् 'यतृङ् प्रयत्ने' [७११] इत्यस्मात "ड-त्रि-स्तिव्०" [५ । ३ । १३८] इति 'इ'प्रत्यये यतिरुद्यमः पश्चात्त्वा योगेऽयतिरनुद्यमस्तस्य प्लोषे निमित्तसप्तमीत्वात् प्लोषार्थं विनाशार्थः स्तात् भवेदिति सम्बन्धः । त्वं किं० तमः पापम् अज्ञानं करोतीति णिजि अन्त्यस्वरादिलोपे विचि तम् पापकर्ता मौढ्यकर्ता वा यो रः कामस्तम्रः । 'असूच् क्षेपणे'[१२२१] अस्यति क्विपि अः क्षेपकः तम्रस्यायं "तस्येदम्" [६ । ३ । १६०] अणि ताम्रा म चासौ अश्च ताम्रा कामध्वंसीत्यर्थः । पुनः किं० सिद्धः प्रसिद्धः । पुनः किम्भू० "ते लुग् वा" [३ । २ । १०८] इति पूर्वपदलोपात् मण्डल भामण्डलं विद्यते यस्य स मण्डली "अतोऽनेकस्वरात्" [७ । २ । ६] इति इन् । पुनः किं० प्रति प्रतिकूलो यः कामस्तस्य ऊहनं तस्मिन्—"हो हस्ते दारुणि शूलिनि" [ ] इत्येकाक्षरवचनात्—हः शिवः स इव प्रत्यूहस्तस्य स० । पुनः किं० 'भंस भर्त्सन-दीप्त्योः' इत्यतः बभस्तीति क्विपि भः दीप्यमानः इत्यर्थः । हे दीप्रदीपाङ्कुर ! दीप्यमानप्रदीप ! त्रिभुवनभवनाऽऽन्तरतमःक्षयकारित्वात् ॥२७॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥२८॥

१ 'ताम्र' इति एकवचनं समुचितम । २ 'भस्' धातु हैमे धातुपाठे न विद्यते किन्तु माधवीयधातुवृत्तौ तृतीयगणे अष्टादशतमो धातुर्विद्यते—"भस भर्त्सन—दीप्त्योः" माध० धातु० पृ० २७५ ।

[सिद्धये वर्धमा नः स्तात् ताम्रायन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीप्रदीपां कुरायते ॥२८॥]

[१ सिद्धये चतुर्थ्या एकवचनम् । 'भवतु' इति क्रिया अध्याहार्या । २ व+ऋद्ध+मा - वर्धमा प्रथमैकवचनम् । अनेन 'व' शब्द संजात । ३ न इति षष्ठी । ४ स+ता+अत्=स्तात् प्रथमाया एकवचनम् । अनेन 'स' शब्द । पूर्वेण 'व'शब्देन 'स'शब्दस्य सयोगे 'वस' इति श्रीवासु-पूज्यजिननामसूचक 'वस' इति पदम् । ५ ताम्र+आयत्+नख+मञ्च्=ताम्रायन्नखमन् । प्रथमैक-वचनम् 'ड' योगे 'न्' इत्यस्य णत्वम् । ६ ड+री+डरी प्रथमा । अत्र रस्य लध्वनौ, विसर्गस्य अगणने डली इति । तत ताम्रायन्नखमन्+डली=ताम्रायन्नखमण्डली इति । ७ प्रति+अव=प्रत्यू +हस+लभा=(तत. वहुव्रीहिसमासे) प्रत्यूहसलभ । अत्र विसर्गयो अनुच्चारणे 'स'स्य 'श'ध्वनौ प्रत्यूहशलभ इति प्रथमान्तम् । ८ प्लोपे इति सप्तम्यन्तम् । ९ दीप्रदीप्+आम्=दीप्रदीपाम् षष्ठी-वहुवचनम् न इत्यस्य विशेषणम् । १० कु+र–आयति=कुरायति । तस्य षष्ठ्यैकवचनम् कुरायते । अत्र विसर्गस्य अध्वनि· तत कुरायते ।]

व्याख्या–वकारेण ऋद्धो मा वाचको वर्धमा· नः अस्माकं सिद्धये भवतु इति क्रियाशेषः । किम्भूतो वर्धमा· ? 'स्' कारं तायते पालयतीति स्ता ईदृशः अत् अकारो यस्मिन् स स्तात् । एतावता 'वस्' इति सिद्धम् । वस· वासुपूज्य इत्यर्थ· । कथ मित्याह–'वसुपूज्य'शब्दात् "ते लुग् वा"" [३ । २ । १०८] इत्युत्तरपदलोपात् वसुर्व-सुपूज्यनृपस्तं स्वपितृतया आख्यातीति णिजि "त्र्यन्त्यस्वरादे" [७ । ४ । ४३ ] लोपे, अचि वस· श्रीवासुपूज्य इत्यर्थ· । अथ विशेषणयोजनम्–'वर्धमाः' किं०– ताम्रायन्नखम्[२] । रक्तवर्णत्वात् ताम्रं धातुविशेषः तं 'यतण् निकार०' [१७३८] इति चौरादिक'यति'धातोर्निकारार्थत्वात्, णिचोऽनित्यत्वादभावे आङ्पूर्वात् आय-तति निराकरोति क्विपि ताम्रायतो ये नखास्तान् 'मचुङ् धारणोच्छ्राय०' [६५६] इत्यतो मञ्चते धारयति क्विपि सौ "पदस्य" [२ । १ । ८९] इति 'च'लोपे ताम्रा-यन्नखमन् । पुन· कि० कु कुत्सितो यो "रो ध्वनौ तीक्ष्णे वैश्वानरे कामे" [ ] इत्येकाक्षरोक्ते रः कामस्तस्य आयतिर्गौरवं तस्या· प्लोपे विनाशे ड. शिवः तस्य [४]"री भ्रम०" [ ] इत्येकाक्षरवचनात् री भ्रमस्तां ईयते गच्छति क्विपि डली· र-लयोरैक्याल्लत्वम्, कामप्रभावस्य प्लोपे शिवभ्रान्तिं गच्छन्नित्यर्थः । पुन· किं०

---

१ 'वस' इति अदन्तम् उचितम् । २ 'ताम्रायन्नखमन्' इति शुद्धम् । ३ पुस्तिकायाम् 'ताम्रा-यता' इति लिखितम् परन्तु 'ताम्रायत्' शब्दस्य वहुवचनम् ताम्रायत इत्येव समुचितम् । 'ताम्रा-यता' इति तु तृतीयान्त कथ 'नखा' इत्यस्य विशेषणम् स्यात् ? । ४ "री भ्रान्तौ"–एकाक्षर० सुधा० श्लो० ३८ ।

प्रतिपूर्वाद् दीप्यर्थात् कर्तरि क्विपि ऊटि प्रत्यूः दीप्यमानो यो हस· प्रकाशः तस्य लभा प्राप्तिर्यस्य स प्रत्यूहशलभ श्लेपाद् विसर्गलोप·। न· किं० दीप्रा दीपनशीला दीपनं "भ्यादिभ्यो वा" [५।३।११५] इति क्विपि दीप् कान्तिर्येषां तेषां दीप्रदीपाम् ॥२८॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥२९॥

[ [1]सिद्धये[2]वर्धमाऽऽनै[3]स्ताऽत्ता [4]म्लायन् न [5]खमण्ड ! [6]ली ।
[7]प्रत्यूहशलभप् [8]लोषेद्[9]ईप्रदीपाऽकु[10] [11]रायते ॥२९॥ ]

[१ सिद्धा+ङे=सिद्धे तृतीयैकवचने सिद्धया । २ इव्+अर्धम ! सबोधनैकवचनम् । 'इव्' इत्यनेन 'वि' सूचित 'अर्धम' इत्यनेन 'म' सूचित तत· 'विम' इति निष्पन्नम् । ३ न+अस्ता =अनस्ता=आनस्त+अत्ता=आनस्ताऽत्ता प्रथमैकवचनम् । ४ म्लायन् शतृप्रत्ययान्तं प्रथमैकवचनम न निषेधवाची अर्थात् न म्लायन् म्लानिमुक्त इत्यर्थ । ५ खमण्ड ! सबोधनैकवचनम् । ६ ली 'ल'सूचकम् सबोधनैकवचनम् । विसर्गस्य अगणने 'ली' इति । 'ल'पदप्राप्तये 'ली'पदकल्पनापेक्षया 'ला' धातो कर्तरि प्रत्यये 'ल' इति निष्पाद्य तत साक्षात् 'ल'वर्णस्य उपलब्धि सुलभा । मोक्षलक्ष्मीम् इति अध्याहृत्य ताम् लाति गृह्णाति इति 'ल' इत्येवम् अर्थस्यापि सौगम्यम् । ७ प्र+ति+ऊह+शर+भप्=प्रत्यूहशरभप् प्रथमैकवचनम् । 'ल' उच्चारणे प्रत्यूहशलभप् । ८ लोष+इद् =लोषेद् प्रथमैकवचनम् । ९ ई+प्रदीप ! ईप्रदीप ! सबोधनैकवचनम् । १० अकु–अनिन्दितम्–क्रियाविशेषणम । ११ रायते अङ्गीक्रियते क्रियापदम् प्रथममेव पूर्वोक्तेन 'सिद्धया' इति पदेन 'रायते' इत्यस्य संबन्ध । एवम् 'प्रत्यूहशलभप्+लोषेद् ईप्रदीप+अकु+रायते' इत्येषा सर्वेषा पदाना संयोगे अनुस्वारस्य उच्चारणे वृद्धि नीते 'प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते' इति निष्पन्नम् ।]

व्याख्या—इकारेण युक्तो व् वकारो नाम्नि यस्य स इव् । तथा अर्धं मध्यभागे भवो म· मकारो यस्य स अर्धम इव् चासौ अर्धमश्च इवर्धम· तस्य स० । एतावता 'विम्' इति सिद्धम् । लक्ष्मी इच्छतीति क्यनि "क्यनि" [४।३।११२] इति ईकारे क्विपि "अत" [४।३।८२] इत्यल्लोपे "य्वो प्वय्०" [४।४।१२१] इति यलोपे ली तस्य सम्बो० । एतावता 'विमल' इति सिद्धम् । हे **विमलनाथ !** हे खमण्ड ! खानां नृपाणां मण्डनं मण्डो भूषा यस्मात् स खमण्ड, तस्य सम्बो० । हे ईप्रदीप ! ई केवलज्ञानलक्ष्मी तया प्रदीप्यते इति "नाम्युपान्त्य०" [५।१।५४] इति के ईप्रदीप तस्य सम्बो० । भवान्—सिद्धा शाश्वती चासौ ई मुक्तिलक्ष्मीश्च सिद्धे तया सिद्धया मुक्तिलक्ष्म्या अकु अकुत्सितं यथा स्यात् तथा—रायते लायते

१ 'इव्' शब्द 'वि'शब्दसूचक ।

अङ्गीक्रियते इत्यर्थः । भवान् किं० म्लायति शतरि म्लायन् कथम् न–म्लानिमुक्त इत्यर्थः । कथम्भूतः आनस्तात्ता 'अर्षा असी गत्यादानयोश्च' [९३१, ९३२] इति चानुकृष्टदीप्त्यर्थाद् असते क्विपि भावे तलि अस्ता, पश्चान्नञा योगे अनस्ता अदीप्तिर्मालिन्यमित्यर्थः । तस्या अयं "तस्येदम्" [६।३।१६०] इत्यणि आनस्त स चासौ 'अद प्सांक् भक्षणे' [१०५९] अत्तीति तृचि अत्ता च भक्षकश्च विनाशकश्चेत्यर्थः । आनस्तात्ता अदीप्तिविनाशक इत्यर्थः । पुनर्भवान् किं० प्रत्यूहशलभप् प्रकृष्टः तानां चौराणाम् अपत्यानि "अत.०" [६।१।३१] इञि तयश्चौरपुत्राः, तेषाम् ऊहो विचारस्तस्य र-लयोरैक्यात् शरो विनाशस्तस्मिन् भपं चन्द्रम् आख्याति णिजि क्विपि प्रत्यूहशलभप्। चन्द्रोद्गमे हि चौराणां चौर्यविषय ऊहोऽपि नश्यति। तस्मिन् चौराणां चौर्यं कर्तुमशक्यत्वात् । अत एव 'लुष् मूष् स्तेये' [५०१] इति लोषनं (णं) घञि लोष. चौर्यम् तस्य अयनं क्तौ इतिर्गमनं तत् करोति णिजि क्विपि लोपेत् ॥२९॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥३०॥
[ [1]सिद्धये [2]वर्ध ! [3]माऽ[4]नस्तात् ! [5]ताऽम्रायं [6]नखम् [7]अण्डली ।
[8]प्रत्यूहशरभप्लोषे [10]दीप्रं दीपाङ्कु[12]राऽयते ॥३०॥ ]

[ १ सिद्धय इति क्रियापदम् – पञ्चम्या 'हि' प्रत्यये – नामधातुरूपम् । २ इवर्ध ! सबोधनैकवचनम् । ३ मा 'माम्' इत्यर्थे द्वितीयैकवचनम् । ४ अनस्+तात् = अनस्तात् संबोधनैकवचनम् । 'अनस्' इत्यनेन 'अन्' पदम् । 'तात्' इत्यनेन 'त' 'पदम्' द्वयो सयोगे 'अनत' इति जातम् । ५ त+अम्लायम्=ताम्लायम् द्वितीयैकवचनम् 'मा' इत्यस्य विशेषणम् । लस्य रत्वे ताम्रायम् । ६ नखम् 'मा' इत्यस्य विशेषणम् द्वितीयैकवचनम् । ७ अ+डली सबोधनम् अनेन 'अ' इति वर्ण सूच्यते, पूर्वोक्ते 'अन्+त' पदे 'अ' इति मध्ये प्रविष्टे 'अनन्त' इति जातम् अनन्तनाथजिनस्य सूचकम् । ८ 'प्रति' इति 'प्रति'सूचकम् अव्ययम् । ९ ऊह+शर+भ+प्लोषे ऊहशरभप्लोषे रस्य लत्वे 'प्रति' पदेन सयोगे प्रत्यूहशलभप्लोषे सप्तम्येकवचनम् । १० दी+इप्रदीपो–दीप्रदीपो–दीप्रदीपाम् । 'मा' इत्यस्य विशेषणम् अत्र 'प्रदीपो' इति ओकारान्त शब्द तस्य द्वितीयैकवचनम् । १२ कु + रा + अयते कुरायते ! सबोधनैकवचनम् । ]

व्याख्या–'अ' 'न्' इत्यक्षरद्वयम् असति आदत्ते क्विपि अनस् तस्य स० । तथा अ इति यो डो ध्वनि तेन ड्लीयते सम्बद्धीभवतीति क्विपि अंडली, तस्य स० एतावता 'अन' इति सिद्धम् । तथा तकारम् अतति गच्छति क्विपि तात् तस्य सं० । एतावता **अनन्तः** श्रीअनन्तजित्, तस्य स० हे अनन्तः ! हे इवर्ध !

ई कामं 'वर्धन (ग्) छेदन-पूरणयो'' [हैमधातुपा० चुगदि० ९४] इति वर्धयति छिनत्ति अचि अणि वः इवर्धस्तस्य सं०। तथा कौ पृथिव्यां राजति "क्वचित्" [५ । १ । १७१] हे कुरः 'अयि गतौ' (७९०) इत्यतः "ङ-कि-श्तिव्०" [५ । ३ । १३८] इति तिवि अयतिर्ज्ञानं यस्य तस्य सं० हे कुरायते ! । त्वं "अमा त्वा-मा" [२ । १ । २४] इति माऽऽदेशे मा प्रति मां प्रति सिद्ध्य-सिद्धिं कुर्वित्यर्थः । मां० किं० ताश्चौरा रागादयस्तैर्न म्लायति "तन्-व(व्य)धीण्०" [५ । १ । ६४] इति णे ताऽम्लायस्तं ताम्लायम् । पुनर्मां किं० नखमिव नखम् अतिलघिष्ठमित्यर्थः । पुनर्मां किं० ई कामं प्रयति क्विपि "ईर्व्यञ्जनेऽयपि" [४ । ३ । ९७] इति 'ई'कारे ईप्रदीर्जिनस्तेन हेतुभूतेन पुनामि आत्मानं विचि ईप्रदीपौः तं ईप्रदीपाम् । अत्र विचि गुणे अमि "आ अम् शसोऽता" [१ । ४ ।७५] इति आकारे "समानादमोऽत" [१ । ४ । ४६] इति अल्लोपे रूपसिद्धिः । त्वं किं० दिनं करोतीति णिजि क्विपि दी सूर्यः स इव । कस्मिन् ? ऊहं विचारं 'शृग् हिंसायाम्' [१५३१] शृणाति अचि ऊहशरा रागादयो वैरिणस्त एव भानि नक्षत्राणि, तेषां प्लोपे यथा सूर्येण भानि व्यपनीयन्ते, तथा त्वया रागादयोऽपि इत्यर्थः ॥३०॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥३१॥
[ सिद्धयेऽवर्धमा नः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशल-भ-प्लोपे[11] दीप्र[12]दीपां कुरायते[14] ॥३१॥ ]

[ १ चतुर्थ्या एकवचनम् । २ अवर् प्रथमैकवचनम् 'र्'कारयुक्त इत्यर्थः । ३ धमा प्रथमैकवचनम् ध+म्+अस्-धमस् तत धमा धकारमकाराभ्या सहित अर्थात् 'अवर्' शब्देन 'र'युक्त तथा 'धमस्'शब्देन धकार-मकारसहित एव च 'धर्म' इति नाम श्रीधर्मनाथजिनस्य सूचितम् । ४ षष्ठी । ५ आशीर्वादसूचक पञ्चम्या तुप्रत्ययस्य 'तात्' आदेशो तृतीयपुरुषैकवचने क्रियापदम् । ६ प्रथमाया एकवचनम् 'ई' इत्यस्य लक्ष्मीसूचकस्य विशेषणम् । ७ यन्नखम् कर्मकारकरूपम् द्वितीयाया एकवचनम् । अस्य 'आयते' क्रियया अन्वय -यन्नखम् आयते-आगच्छति इति । ८ अम् इत्यपि कर्मकारकम् उपमानरूपम् यथा अम्-विष्णुम्-ई आगच्छति तथा यन्नखम् ई आगच्छति इति । अम्+डली इत्यत्र डयोगे 'म्' इत्यस्य 'ण्' इति अनुनासिक [ हैम० १ । ३ । १४] सूत्रेण । ९ डली+ई -डली अत्र विसर्गस्य अगणने 'डली' इति ज्ञेयम् । १० प्रति+ऊ+हस+ल+भ=प्रत्यूहसल-भ । 'स'स्य 'श'ध्वनौ प्रत्यूहशलभ इति । ११ प्र+उषा+इन्धू=प्रोपेत् इति । 'प्रोपेत्' अत्र अन्त्यव्यञ्जनस्य नोच्चारणम् अत प्रोपे इति पदम् । 'यन्नखम् इत्यस्य विशेषणम् । 'र'स्य 'ल'त्वे 'प्लोपे' इति । १२ दीप्रदीपाम् षष्ठीबहुवचनम् । १३ 'कु प्रथमैकवचनम् दीप्रदीपा कु इति अन्वय । 'ताम्रा' इत्यस्य विशेषणम् । १४ आयते-आत्मनेपदिन 'अय्' धातो 'आङ्'उपसर्गपूर्वकस्य तृतीयपुरुषैकवचनम् । ]

व्याख्या—धम् इत्यक्षरद्वयम् । 'असी गत्यादान०' (९३२) इति असतेः क्विपि धमाः । तथा 'अव रक्षण०' [४८९] इति गत्यर्थाद् अवेः अचि अवो गच्छन् र् रकारो यस्मिन् स अवर् । एतावता धर्मः **श्रीधर्मनाथः**—इत्यर्थः—नः अस्माकं सिद्धये स्तात् । 'उत्तरार्धगो यच्छब्दः पूर्वार्धे तच्छब्दं द्योतयति' इति यन्नखम् यस्य जातावेकवचनेन नखं नखानीत्यर्थः । ईः लक्ष्मीः आयते आगच्छति । ई. किं० ताम्रा अनुरक्ता । पुनः किं० कुः स्थानम् । कासाम् ? दीप्रदीपां कान्तीनाम् । पुनः किं०'लड् विलासे' [२५४] ड-लयोरैक्याद् व्यत्यये डलति विलसति क्विपि डल् सविलास स्यात् एवम् ईयते गच्छति क्विपि डली सविलासगामिनीत्यर्थः । यन्नखम् किं० प्रतिकूलम् ऊः कान्ति-स्तस्या ह्रस लक्षणया प्रकाशं लान्ति "आतो ड.०" [५ ।१ । ७६) इति डे प्रत्यूह-शलानि भानि नक्षत्राणि यस्मिंस्तत् प्रत्यूहशलभं यत् प्रकृष्टं "उषा निशान्ते" [हैम-अभिधानचिन्ता० सामान्यकां० श्लो० १५३६] मालायाम् अव्ययः प्रभातार्थे 'उषा' शब्द इति उषा प्रभातं रक्तवर्णत्वात् । तद्वत् इन्द्रे दीप्यते इति क्विपि "नो व्यञ्ज-नस्य०" [४ । २ । ४५] इति 'न्'लोपे प्रत्यूहशलभप्लोषेत् । प्रभातं हि रक्तं वर्ण्यते, नखा अपि रक्ता इति विशेषणसंगतिः । श-सयोरप्यैक्यं दृश्यते यथा-'श्रीशम्भवाऽऽखण्डलवन्द्य ! नन्द्या" [ ] इत्यत्र श्रियः सम्भव उत्पत्तिः पक्षे श्रीशम्भवस्तृतीयजिन इति । कमिव ? आयते अमिव विष्णुमिव यथा अं विष्णुम् ईः लक्ष्मीः आयते तथा यन्नखमपीत्यर्थः ॥३१॥

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥३२॥**

[[1]सिद्धये [2]वर्धमानस्[3]ताऽत् ताम्रा[4] य[5]न न[6]खमन् ड[7]ली ।
प्र[8]त्यूह शल[9]भ [10]प्लोषेदी[11]प्रदीपाङ्कुरायते ॥३२॥ ]

[१ चतुर्थ्यन्तम् । 'भवतु' इति क्रिया अध्याहार्या । २ वर्धमान -प्रथमैकवचनम्-शुभशकु-नार्थवाचकम्—अष्टमङ्गलपट्टे 'वर्धमान'नामा पदार्थ समायाति । ३ ता+अत्=तात्—तात् इति काम-देवस्य विशेषणम् 'यन्'पदेन संबद्धम । ४ 'ताम्रास्' 'ताम्र+अस्'—अत्र 'ताम्र' इति पद कोकिल-सूचकम् । ५ इ+अन्त्=यन् अर्थात् ताम्रास्+इ+अन्त्=ताम्रायन् अत्र 'इ'कारस्य 'य'भावपूर्वमेव 'स्'व्यञ्जनस्य रुत्वे तस्य च यत्वे यस्य च लोपे कृते सति पश्चात् इ+अन्त्–इ+अन् इत्यस्य 'यन्' इति निष्पाद्यम् अन्यथा न रूपसगति । ६ न+ख+मञ्च्=नखमन् प्रथमैकवचनम् । ७ ड+ली=डली 'ड'वर्णधारक प्रथमैकवचनम्, विसर्गो न गण्यते । तत डली । ताम्रायन्+नखमन्+डली=ताम्रायन्नखमण्डली । ८ प्रति+ई+ऊ+हा=प्रत्यूह प्रथमैकवचनम् अत्रापि विसर्गो न गण-नीय ।९ शलभ इति प्रथमैकवचनम् 'श'वर्णधारक । १० प्र+उ+ष+इन्=प्रोषेत् प्रथमैकवचनम् 'पो'

वर्णधारक अनेन 'पो' 'डली' इत्यनेन 'ड' 'शलभ' इत्यनेन च 'श' इत्येवं तेषां संयोगे 'षोडश' इति सिद्धम् तच्च श्रीशान्तिजिननामसूचकपदम् । ११ 'ई+प्रदीप+अङ्कुर' इत्यस्य नामधातौ आचारक्यङि ईप्रदीपाङ्कुरायते ।]

व्याख्या—र-लयोरैक्यात् प्रकृष्टेन उकारेण युक्तं षकारम् एति गच्छति क्विपि प्रोषेत् षो इति सिद्धम् । तथा डकारम् 'ईङ् (ली)ङ्च् श्लेषणे' [१२४८] इत्यतो लीयते श्लिष्यति क्विपि डली. । एतावता 'षोड' इति सिद्धम् तथा शकारस्य लभा यस्य स शलभ. । एतावता 'षोडश' इति सिद्धम् । इति षोडश. **श्रीशान्ति-जिनः** । सिद्धये कार्यनिष्पत्तये निमित्तभूतायै । ई पृथ्वी तस्या जलसेकादिना प्रदीप्यते "नाम्युपान्त्य०" [५ । १ । ५४] इति के ईप्रदीपो यः अङ्कुरो दूर्वाऽऽदिप्ररोहस्तद्वदाचरति क्यङि ईप्रदीपाङ्कुरायते । यथा दूर्वादिप्ररोह शुभशकुनत्वात् कार्यसिद्ध्यै भवति, तथा श्रीशान्तिरपि सिद्ध्यै मुक्त्यै स्यादित्यर्थ. । अत एव किं० वर्धमानो लोके वर्धमानशब्द शकुनविशेषरूढ. स इव वर्धमानशकुनसदृश इत्यर्थ । पुन' किं० तां लक्ष्मीं अत्तयति मातृतया आख्याति णिजि क्विपि णिज्लोपे सौ "पदस्य" [२ । १ । ८९] इति तलोपे तात् । तथा "ताम्राक्ष कोकिल." [हैम अभिधान०तिर्यक्कां० श्लो० १३२१] इति मालावचनात् ताम्राक्ष' कोकिलः तस्य "ते लुग् वा" [३ । २ । १०८] इत्युत्तरपदलोपात् ताम्रस्तेन असति दीप्यते क्विपि ताम्राः । तात् चासौ ताम्राश्च ईदृग् य. इः काम' तं अन्तयति क्षयं नयति क्विपि सौ "पदस्य" [२ । १ । ८९] इति तलोपे "दीर्घङ्याब्०" [१ । ४ । ४५] इति सिलोपे तात्ताम्रायन् । कामो हि लक्ष्मीं मातृतया आख्याति, कोकिलेन च कामो दीप्यते इति कविरूढेः ताम्रासित्यत्र "सो रु." [२ । १ । ७२] इति रुत्वे "रोर्यः [१ । ३ । २६] इति यत्वे "स्वरे वा" (१ ।३ ।२४) इति यलोपे ताम्रायन् इति रूपसिद्धिः अन्यथा ताम्रास्यन् इतिरूपमनिष्टं स्यात् । पुन' कि० नखमन् 'नैस्तु संविदि' [ ] इति वचनात् नो ज्ञानम्, खं सुखम्, ते तद् वा'मचुङ् धारणोच्छ्राय०' [६५६] इति मञ्चते धारयति क्विपि सौ "पदस्य" [२ । १ । ८९] इति ढलोपे नखमन् । पुन किं०. प्रतिकूला तुरङ्गमादिरूपा ई लक्ष्मी, तस्या ऊ रक्षणं तां जहाति त्यजति "आतो ड.०" [५ । १ । ७६] इति डे प्रत्यूह श्लेषाद् विसर्गाभाव ॥३२॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥३३॥

---

१ अत्र 'ताम्रामित्यन्' इत्यस्य स्थाने 'ताम्रास्+इ+अन' इति वर्णावली समुचिता । २ "नो बुद्धौ ज्ञान–बन्धनयो "–एकाक्षर०सुधा०श्लो०२७ । ३ 'मञ्चते' इतिप्रकारके धातुरूपे द नास्त्येव । अत. 'च' लोपे इति शुद्धम् ।

[ १सिद्धये २वर्धमानः ३स्तात् ४ताऽऽम्रायन्नखमण्डली ।
५प्रत्यूह ६शलभप्लोषे ७दीप्रदीपाङ्कुरायते ॥३३॥ ]

[ १ चतुर्थ्यन्तम् । २ वर्धम्+आन वर्धमान । वर्धम् प्रथमैकवचनम् । ऊ+ अर्ध+ म् = वर्धम् । यस्य नाम्न अर्धभागे म् विद्यते इति अनेन पदेन सूचितम् । आन· प्रथमैकवचनम्—जीवनतुल्य इत्यर्थ । ३ क्रियापदम् । ४ ता+ आम्र + अस् = ताम्रास् + अन् + नखमण्डली = ताम्रास् + अन्नखमण्डली । पश्चात् स रुत्वे यत्वे च ताम्रायन्नखमण्डली प्रथमैकवचनम् । ५ प्रति + ई + उ + ऊह=प्रत्यूह अनेन पदेन 'थु' वर्ण सूचित । प्रत्यूह इति प्रथमान्त भिन्न पदम् । ६ शल् + अभ + प्लोष् = शलभप्लोषे चतुर्थ्या' एकवचनम् 'सिद्धये' इत्यस्य च विशेषणम् । ७ दीप्रदीप+अञ्च् = दीप्रदीपाङ् प्रथमैकवचनम् 'नखमण्डली' इत्यस्य विशेषणम् । ८ 'कु' + राम् = कुरा —प्रथमैकवचनम् अनेन 'कु' वर्ण सूच्यते एवम् 'कु' तथा 'प्रत्यूह' इत्यनेन 'थु' तथा 'वर्धम्' इत्यनेन मध्यग 'म्' । एतेषा सयोगे कु+म्+थु, तत. सन्धौ 'कुन्थु' इति श्रीकुन्थुजिननामसूचनम । ९ यते षष्ठी-एकवचनम् । विसर्गस्य अगणने 'यते' इति । यते आन जीवनतुल्य इति भाव । ]

व्याख्या—कु इति वर्णेन युक्तो 'रासृङ् शब्दे' [८४९] इत्यतः कर्तरि क्विपि राः वाचको यस्य स कुराः 'कु' इति सिद्धम् । तथा प्रकृष्टं तकारं ईयते गच्छति क्विपि प्रत्तीः प्रत्ती· थकारस्तत्र उकारय ऊहो यस्मिन् स प्रत्यूह· श्लेषाद् विसर्गलोपः । एतावता 'कुथु' इति सिद्धम् । तथा अवेर्गत्यर्थात् कर्त्तरि क्विपि ऊर्गच्छन् अर्धे नाम्नः तुल्य-भागे मध्ये इति यावत् म् मकारो यस्य स वर्धम् पश्चात् "म्नां धुड्०" [ १।३।३९ ] इति नत्वे **कुन्थुः** श्रीकुन्थुजिन. । सिद्धये सम्पत्तये स्तात् । किं० ' अन श्वसक् प्राणने' [१०८९] इत्यनेर्घञि आनो जीवनं जीविततुल्य इत्यर्थ· । कस्य ? यते· साधोः । एकव-चनं जातिविवक्षया साधूनामित्यर्थः । पुनः किं० ता ध्वनिर्देशनारूपा तया कृत्वा मधुरत्वात् आम्रं फलविशेषम् अस्यति तिरस्करोति क्विपि ताम्राः। पुनः कि० "अः कृष्णे विनतासूनौ" [ ] इत्यनेकार्थात् अः गरुडः तद्वदाचरति "कर्तुः क्विप्०" [३।४।२५] इति क्विपि शतरि अत् सुवर्णवर्णत्वात् गरुडवदाचरत् नखानां मण्डलं समूहो विद्यते यस्य "अतोऽनेकस्वर०" [७।२।६] इति इनि अन्नखमण्डली पीत-रक्तयोरैक्यात् नखानां रक्तत्वात् स्वर्णकायोपमा । पुन किं० दीप्रो दीपनशीलो यो दीपनं घञि दीप· का-न्तिस्ताम् अञ्चति गच्छति श्रयतीति यावत् क्विपि दीप्रदीपाङ् अत्र सौ "अञ्चोऽनर्चा-याम् " [४।२।४६] इति नलोपे "अच" [१।४।६९] इति नोऽन्ते " पदस्य" [२। १।८९] इति चलोपे, " युज्-अञ्च—क्रुञ्चो०"[२।१।७१] इति डे रूपम् । सिद्धये किं० ' शठ हिंसा-सक्लेशयो ' [२२२] इत्यत शठति हिनस्ति जगदिति क्विपि ठस्य डत्वे ड-लयोरैक्याल्लत्वे शल् जगद्धिंसको य., आत् कृष्णाद् भवतीति " क्वचित्"

[५।१।१७१] डे अभः कामः, तं प्लोषति दहति विचि गुणे शलभप्लोट् तस्यै शलभप्लोपे कामभेदिकायै चारित्ररूपायै इत्यर्थः ॥३३॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥३४॥

[सिद्धये[2] वर्धमा[3] नः[4] स्तात्[5] ताम्रा[6] यन्-न-खमण्डली[7]।
प्रत्यूहशलभप्लोपे[8] दीप्रदीपाङ्[9] कुरायते[10] ॥३४॥]

[१ सिद्ध-प्रसिद्ध- इति प्रथमैकवचनम्। २ अ+ई=ए इति प्रथमान्त पदम्। अनेन 'अ'वर्ण सूचित। सिद्धस्+ए इति स रुत्वे यत्वे च 'ए'वर्णस्य सयोजने सिद्धये इति। ३ वर्धमा -ऊ+अ=व+र्=वर्। वर्+धमा =वर्धमा। आभ्या पदाभ्याम् अकारयुक्त 'र'कार सूचित.। तत 'ए' इत्यनेन आभ्या पदाभ्या च 'अर' इत्येव श्रीअरजिनस्य नाम सूचितम्। ४ न इति षष्ठी। ५ स्तात् इति क्रियापदम्। ६ ताम्र+अस्=ताम्रा -अतिशयताम्रवर्णे -प्रथमैकवचनम्। ७ यत्-व्रतम्। यत्+न+ख-यन्नख+मण्डल=यन्नखमण्डली-प्रथमैकवचनम् 'अर' इत्यस्य विशेषणम्। ८ प्रति+ऊ+ऊह+शलभ+प्लोपे=प्रत्यूहशलभप्लोपे सप्तम्या एकवचनम्। ९ दीप्र+दीप+क्यङ् +दीप्रदीपाय+क्विप्=दीप्रदीपा+आम्=दीप्रदीपाम् षष्ठ्या बहुवचनम् 'न' इत्यस्य विशेषणम। १० कु+र+आयत+ङे=कुरायते विसर्गस्य अगणने कुरायते-एकारान्त प्रथमैकवचनम्।]

व्याख्या—अकारं ईयते गच्छति क्विपि अे.। तथा अवति गच्छति क्विपि ऊर्गच्छन् अकारो यस्मिन् स वः। यो रो रकारस्तं दधाति "आतो डः०" [५।१।७६] इति डे वर्धः। एश्चासौ वर्धश्च एवर्धः मा वाचको यस्य स एवर्धमा· **श्रीअरनाथः** न· अस्माकं सिद्धो ज्ञात· स्तात्—भवतु—इति सम्बन्ध। कि० ताम्रो रक्तवर्णस्तम् अस्यति निजकान्त्या क्विपि ताम्र·। पुन· किं० यन्नखमण्डली यमनं "क्रुत्सम्पदादिभ्य· क्विप्" [५।३।११४] इति क्विपि "गर्मा क्वौ" [४।२।५८] इति मलोपे यत् व्रतम् नः संवित् खम् सुखम् तेषां मण्डलं समूहो विद्यते अस्येति "अतोऽनेकस्वरात्" [७।२।६] इति इनि यन्नखमण्डली। नः किं० दीप्रो दीप· प्रदीपस्तद्वत् आचराम· क्यङि क्विपि षष्ठ्याम् "लुगातोऽनापः" [२।१।१०७] इत्यालोपे दीप्रदीपाम्। कस्मिन्? प्रति प्रतिकूला या ऊर्हिंसा, तस्या यः ऊहस्तर्क. स· (प्रत्यूहः) स एव शलभ· तस्य प्लोपे विनाशे प्रत्यूहशलभप्लोपे। अयमर्थ·—हिंसारूपशलभानां प्लोपे दीपवत् आचरताम् इति। जिनः किं० कुत्सितो रः कामस्तस्मादायतं उपरमस्तम्। 'ईङ्च् गतौ' [१२५२] इत्यतः क्विपि कुरायते श्लेषाद् विसर्गलोप. ॥ ३४ ॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥३५॥

---

१ अत्र ताम्र+अम् इति जाते 'ताम्रास्-ताम्रा इति उचितम्

[सिद्धये वर्ध ! मा ! नः स्तात् ताऽऽम्रा यन्नखमण्डली ।
प्रत्यूह-शल-भ-प्लोषे दीप्रदीपाङ्कु रायते ॥३५॥]

[ १ सिद्धये चतुर्थ्यन्तम् । २ वा+ऋद्ध=वर्ध ! अत्र ,ऋद्ध' इति सबोधनम् । 'वा' निश्चयार्थं तस्य च 'स्तात् वा'–'स्तात् एव' इत्येवभाव. । 'स्तात्' क्रियापदम् । ३ म+अस्=मा एतदपि सबोधनैकवचनम् । इद च मकारसूचकम् । ४ न षष्ठी । ५ त+आम्+र+अस्=ताम्रास्-ताम्रा विसर्गस्य अगणने ताम्रा इति प्रथमैकवचनम् । ६ 'य'नाम्न आचारार्थे क्विपि यन् प्रथमैकवचनम् । ७ अखमण्डली अ+ख+मन्+ड-ली अखमण्डली अनेन च 'ल्ली' इति सूच्यते। 'मास्'पदेन अनेन च पदेन 'मल्ली' इति श्रीमल्लिजिनस्य नाम सूचितम् । ८ प्रत्यूह+शर+भ+प्लोषे सप्तम्यन्तम् । रस्य लत्वे प्रत्यूहशलभप्लोषे । ९ दीप्रदीपाम् षष्ठीवहुवचनम् । १० कु प्रथमैकवचनम् । ११ आ+यत+ई=आयते । कु +आयते=कुरायते ।]

व्याख्या—'ऋंक् गतौ' [११३५] 'गत्यर्था ज्ञानार्थाः' इति अरणं क्विपि तोऽन्ते ऋत् ज्ञानं केवलज्ञानमित्यर्थ यद्वा 'ऋति (त) घृणा-गति-स्पर्धेषु' [२८७] इति, अत· अर्तनं ऋत् ज्ञानं तद् दधाति डे ऋद्धो जिनस्तस्य स० हे ऋद्ध ! त्वं न अस्माक सिद्धये मुक्तये स्ताद् भवेति सबन्ध । वा एवार्थे स्तादेवेत्यर्थ । त्वं कि० मकारेण असति शोभते नामद्वारा इति क्विपि मा', तस्य स० हे मा ! एतावता म इति सिद्धम् । तथा अकारेण "खं शून्ये" [ ] इत्येकाक्षरवचनात् ख· शून्यो मङ्गतीति क्विपि मन् गच्छन् [1]डो डकारो यस्मिन् स अखमण्ड· ईदृशो लीकारो यस्य नाम्नि स अखमण्डली· । ड-लयोरैक्याल्लत्वे एतावता 'मल्ली' इति सिद्धम् । मल्लिजिनस्य स्त्रीरूपावतारत्वात् "इतोऽक्त्यर्थात्" [२ । ४ । ३२] इति ङ्या मल्ली श्रीमल्लिजिनस्तस्य स० । त्व कि० "तस्तु तस्करे" [ ] इत्येकाक्षरवचनात् तस्तस्कर· । त इव त· चौरसदृशो निशायामेव प्राय· प्रकटीभावित्वात् तथा आमो राजयक्ष्मादिरोगस्तं करोतीति णिजि क्विपि भ्वादेरभावात् "मो नो म्वोश्च" [२ । १ । ६७] इति नत्वाभावे आम् यक्ष्मादिरोगकृत् । तश्चासौ आम् च ताम् यो र कामस्तम् अस्यति क्विपि ताम्रा पश्चाद् "अवर्ण-भो-भगो० " [१ । ३ । २२] इति रलोप. । पुन किं० "यस्तु मातरिश्वनि" [ ] इत्येकाक्षरवचनाद् यो वायुस्तद्वदाचरतीति "कर्तु· क्विप्०" [३ । ४ ।२५] इति क्विपि धातुत्वे शतरि सौ नागमे यन् वायुरिवाचरन् । कस्मिन् ? प्रत्यूहा विघ्नास्त एव 'शरं जले" [ ] इत्यनेकार्थवचनाद् र-लयोरैक्यात् शलं जलम्, तेन भान्ति शोभन्ते "क्वचित्" [५ । १ ।१७१] इति डे शलभा मेवास्तेषा प्लोषे विनाशे । पुनः किं० कु· स्थानम्, कासाम् ? दीप्राणा दीपां कान्तीनाम् । पुन किं० "आ विधातरि मन्मथे [ ] इति वचनात् आ मन्मथस्तस्माद् यत उपरमस्तस्य ई भूमि· स्थानमित्यर्थ ॥३५॥

---

१ 'ड्'सूचक अय डकार ।

एतावता नमि **श्रीनमिजिनः**। सिद्ध्या शाश्वती चासौ ई शोभा च सिद्धे तया सिद्धया स्वाभाविकशरीरकान्त्या अकु अनीषद् बहुर्यो "रो ऽवनौ तीक्ष्णे वैश्वानरे" [ ] इत्येकाक्षर-वचनात् रो वैश्वानरस्तद्वदाचरति इति क्यनि 'दीर्घङ्च्वि०" [४।३।१०८] इति दीर्घे अङ्कुरायते अनल्पवैश्वानरवदाचरति। कस्मिन्? प्रत्यूहशलभप्लोपे प्रत्यूर्हिंसा सैव 'ह' हस्ते दारुणि "[ ] इत्येकाक्षरवचनात् हानि काष्ठानि शरा बाणाः, तृणविशेषो वा, तत्र भाति "क्वचित्" [५।१।१७१] डे प्रत्यूहशलभो यो प्लोषो विनाशस्तस्मिन्। सिद्धया किम्भूतया? दीप्रो दीपनशीलो यो प्लोषो विनाशस्तस्मिन् सिद्धया। किम्भूतया? दीप्रो दीपनशीलो यो दीपस्तद्वदाचरति क्यङि क्विपि तृतीयाटायां "लुगातोऽनाप" [२।१।१०७] इत्यालोपे दीप्रदीपा प्रदोपवत् प्रकाशिकयेत्यर्थः। जिनः किं०'अट्टि हिंसा-ऽतिक्रमयो '[ ६७४] इति हिंसाऽर्थादट्टे: क्विपि "पदस्य" [२।१।८९] इति टलोपे अत् भावे तलि अत्ता हिंसा सैव आमो रोगस्तं कुर्वन्ति णिजि क्विपि अत्तामो हिंसकाः त एव ये "रा स्वर्णे जलदे धने" [ ] इत्यनेकार्थवचनात् रायो मेघास्तेषु "अन्नः आत्मा वायु "[उणादि-सू० २५८]इति उणादिवचनात् अन्नं वायुमाचष्टे णिजि "त्रन्त्यस्वरादे." [७।४। ४३] इति लोपे क्विपि नामत्वे सौ "दीर्घङी०" [१।४।४५] इति तल्लोपे, "नाम्नो नोऽनह्नः" [२।१।९१] इति नलोपे अत्ताम्रायन् हिंसकजनमयमेघविषये वायु-माचक्षाणः। यथा वायुर्मेघे प्रतिकूल, तथा त्वमपि हिंसकजने इत्यर्थः। तथा ख सूर्यः तस्माद् भवा भा अपि खस्तस्य मण्डलम् भामण्डलम् तद् विद्यते यस्य स "अतोऽनेक-स्वरात्" [७।२।६] इति खमण्डली पश्चाद् विशेषणसमासे अत्ताम्रायन्नखमण्डली। सन्धिसूत्राणि सुगमानीत्युपेक्षितानि॥ ३७॥

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते॥३८॥**

**[ सिद्धयेवर्! धमानस्! ताऽत्ता म्रा! यन् न खमण्डली।**
**प्रत्यूह-शलभ प्लोषे दीप्रद् ईपाङ्कु रायते॥ ३८॥**

[ १ सिद्ध इति प्रथमान्तम्। तत 'एवर्' इति पदस्य सयोगे रस्य यत्वे च सिद्धयेवर्, ततश्च 'धमान' इत्यस्य सयोगे सिद्धये वर्धमान इति ज्ञेयम्। अत्र 'एवर्' इति पदम् एकारसूचकम्। २ अत्र ग्रन्थकार. 'धमा' इति पद न साधितवान् 'व-विषणा, मा-लक्ष्मी ताभ्याम् असति शोभते य स धमा ' इत्येवरीत्या 'धमा' इति पद साध्यम्। ३ 'न!' इति सबोधनम् नकार-

१ उणादिसूत्रे तु "अत्न आत्मा वायु मेघ" इत्येवम् 'अत्' धातो 'अत्न' शब्द 'त्'युक्तो निर्दिष्ट न तु 'अन्न' शब्दो द्विनकारयुक्त। पाठान्तरेऽपि 'अतनम्' इत्येवम् 'त्' युक्तस्यैव पाठ। अतेन ग्रन्थकारेण 'अत्न' इति पदम् 'अन्न' इत्येव पठित सभवेत् अत एव तेन अत्र उणादि-साक्ष्य सूचितम्। २ तस्य लोपे तल्लोपे अर्थात् सिप्रत्ययस्य लोपे।

सूचकम् । ४ ता+अत्ता+अस्=तात्तास् प्रथमान्तम् । ५ म्+रा=म्रा इद पदम् 'म्'सूचकम् । ६ इ+अङ्ग्-यङ्ग् गकारलोपे यन् इति । इद पद 'इ'कारसूचकम् एवम् न्+ए+म्+इ एतेषा सयोगे 'नेमि' इति नाम श्रीनेमिनाथजिनसूचक जातम् ७ 'न' इत्यनेन न -अस्माकम् इत्यर्थो बोध्य'। अर्थात् अथ नेमिनाथो जिन अस्माक सिद्धः-प्रसिद्ध इति। अत्र 'स्तात्' इति क्रिया अध्याहार्या । ८ प्रथमान्तम्। ९ प्रति-ऊह-शलभ प्रथमान्तम् विसर्गस्य अगणने 'प्रत्यूहशलभ' इति ज्ञेयम् । १० प्लोषे सप्तम्या एकवचनम् । ११ दीप्रत् प्रथमाया एकवचनम् । १२ ई+प+अङ्कुर+आयत= 'ईपाङ्कुरायत' अस्य सप्तम्या एकवचनम्-अत्र ग्रन्थकार 'आयति'शब्द निर्दिष्टवान् तस्य तु सप्तम्या एकवचने 'आयतौ' स्यात् अत्र तु 'आयते' इति अभीष्टम् अत अत्र 'आयति'स्थाने 'आयत'शब्दस्य विस्तारवाचकस्य सप्तम्या एकवचन बोध्यम् । ]

व्याख्या—'न्' कारेण असति शोभते क्विपि नस्तस्य स० हे नः ! तथा एकारं 'वरण् ईप्सायाम्' [१९०८] इति वरयति ईप्सति क्विपि एवर् तस्य सं० हे एवर् । एतावता 'ने' इति सिद्धम् । तथा म्कारं 'रांक् दाने' [१०६९] इति परमते आदानार्थात् राति आदत्ते क्विपि म्राः, तस्य स० हे म्रा' ! । तथा इकारम् 'अगु गतौ' [८३] इति अङ्गति क्विपि "पदस्य" [२ । १ । ८९] इति गलोपे यन् । एतावता **नेमिः** श्रीअरिष्टनेमिस्तस्य स० हे नेमे ! त्वं सिद्धः प्रसिद्धो 'न ख' इति अत्र श्लेषाद् विसर्गलोपे नः अस्माक स्ताद्-भव-इति क्रिया । त्वं किं० ता लक्ष्मीः अत्ता माता यस्य स तातः कामः, तम् अस्यति क्षिपति क्विपि तात्ता' । पुनस्त्वं किं० खं ज्ञानम्, तस्य मण्डलं समूहः स विद्यते यस्य स " अतोऽनेकस्वरात्" [७ । २ । ६] इनि खमण्डली। पुन. किं० प्रपूर्वात् 'तयि णयि रक्षणे च' [७९७] इति चानुकृष्टगत्यर्थात्-गत्यर्थानां ज्ञानार्थत्वात्-तयते क्तौ "य्वोः प्वय्०" [४ । ४ । १२१] इति यलोपे, परमते अल्लोपे प्रत्तिर्ज्ञानम् , ऊहो विचार', श सुखम् , द्वन्द्वे तानि करोति णिजि "अन्त्यस्वरादे" [७ । ४ ४३] इत्यन्त्यस्वरादिलोपे, अचि प्रत्यूहशलभा प्राप्तिर्यस्य स प्रत्यूहशलभः श्लेषाद् विसर्गलोप । पुन' किं० "अग्नौ वमिदीप्र." [१६९] शेषवचनात् दीप्र इवाचरति इति क्विपि धातुत्वे क्विपि, "ह्रस्वस्य त् पिति" [४ । ४ । ११३] इति तागमे दीप्रत् अग्निवदाचरत् । कस्मिन् ' प्लोषे विनाशे । कस्या ' ईं लक्ष्मीम् ' पै ओवै शोषणे ' [४७-४८] इत्यत पायति शोषयति "आतो डः०" [५ । १ ७६] इति डे ईपो यो ' आ विधातरि मन्मये" [ ] इत्यनेकार्थवचनात् आ काम स एव योऽङ्कुरस्तस्यायतिर्विस्तार', तत्र ईपाङ्कुरायते ॥३८॥

'१ प्रत्यूहग' 'इति' 'अच्'प्रत्ययान्त 'लभा' इत्यस्य विशेषणम् अत अत्र प्रत्यूहगा-ज्ञानविचारसुखकरी-लभा इति उचितम् । २ "ह्रस्वस्य त पित्कृति" इतिरूपं सूत्रम् ।

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥३६॥
[सिद्धये वर्धमा नः स्तात् ताऽऽम्रा यन्नख–मण्ड-ली ।
प्रत्यूहशल-भ-प्लोपे दीप् रदी पाङ्कुरायते ॥३६॥]

[१ मुनि मुनिमुव्रतो जिन सिद्धये न स्तात् इति अन्वय । अत्र 'सिद्धये' इति चतुर्थ्यन्तम् । 'न' इति षष्ठी । स्तात् इति क्रियापदम् । २ उ+अर्ध=वर्ध अनेन पदेन 'उ' सूचित. । म+आ+अम्=माम् । अनेन पदेन 'म्' सूचित । वर्ध+मा =वर्धमा -प्रथमान्तम् एकवचनम् । एवम् आभ्या पदाभ्या म्+उ='मु' इति निष्पन्नम् । 'यन्' इति पदेन सूचितेन 'नि' शब्देन सह 'मु' शब्दस्य सयोगे 'मुनि' इति पद श्रीमुनिसुव्रतजिननामसूचकम् जातम् । ३ ता+अम्=ताम्रास्+अन्=ताम्रायन् । अत्र सस्य रुत्वे रश्च यत्वे ताम्रायन् । अत्र 'यन्' 'पदेन' 'नि' सूचित । ४ अख+मण्+डली =अखमण्डली यन्+अखमण्डली अत्र अकारे परे 'न्' इत्यस्य १।३। २७। इति सूत्रेण द्वित्वे विसर्गस्य अगणने च यन्नखमण्डली । ५ प्रत्यूह+शल+भ+प्लोपे प्रत्यूहशलभप्लोपे सप्तम्यन्तम् । ६ दीप् दीप्यमान । ७ दीप्+रदी=दीप्रदी प+अङ्कुर+अन्=पाङ्कुरा । तत एतयो पदयो संयोजने विसर्गस्य अविवक्षणे च दीप्रदीपाङ्कुरा । ८ अत+इ=अते । अस्य प्रथमैकवचनम् अते. तत. 'अते' पदात् 'पाङ्कुरा' पदस्य अन्त्यसस्य रुत्वे रश्च यत्वे पाङ्कुरायते ।]

व्याख्या–उकार' अर्धः अंशो यस्य स वर्धः ईदृशो म् मकारस्तम्, आङ्पूर्वादसतेः आसति अङ्गीकरोति क्विपि वर्धमाः एतावता 'मु' इति सिद्धम् । तथा इकारम् अवति रक्षति विचि ऊडभावे "य्वोः प्वय्०" [४।४।१२१] इति वलोपे येषां मते विचो व्यञ्जनकार्यं न स्यात् तेषां वकारस्थितौ 'यव्' ईदृशं 'न्' इति व्यञ्जनं नाम्नि यस्य स यन् पश्चान्नकाररूपघोषवति निमित्तभूते "य्वो" [१।३।२३] इति व्लोपः । एतावता मुनिरिति सिद्धम् । "ते लुग् वा" [३।२।१०८] इत्युत्तरपदलोपान्मुनिः श्रीमुनिसुव्रतजिनो न' अस्माकं सिद्धये स्तादिति सबन्ध' । किं० ता फलादिलक्ष्मीः तया युक्तो यो आम्रश्चूतवृक्षो नीलवर्णत्वात्, तद्वद् असति शोभते क्विपि ताम्रा । पुन किं० अखम् अज्ञानम् तस्मिन् मन्दान् सालस्यान् श्रोतॄन् करोति णिजि क्विपि तल्लोपे "पदस्य" [२।१।८९] इति दलोपे अखमन् यो डो ध्वनिस्तं लीयते लिप्यति क्विपि अखमण्डली. । अत्र "म्नां धुड०" [१।३।३९] इति निमित्तस्यैव पञ्चमे 'मण्डली' इति शब्दो वर्तते । अत्र 'अखमण्ड' इत्यत्र तु मन्दयतीति मन् इति न् तस्य पदान्तत्वात् णत्वाभावेऽपि न-णयोरैक्यात् न दोष इति । एवमस्मिन् प्रकरणे सम्भवे सर्वत्राप्यूह्यम् । पुन. किं० दीप्यते इति

१ अखमन्+डली इत्यस्य समग्रस्यैव पदसज्ञाया विवक्षितायाम् 'न्' इत्यस्य अपदान्तत्वात् सूचितसूत्रेण 'न्' इत्यस्य ण् । यदि पदसज्ञा विवक्षिता तदा न्-णो एकत्व ज्ञेयम् इति ग्रन्थकार एव सूचयति ।

क्विपि दीप् दीप्यमान इत्यर्थः। अत्र विरामविवक्षया "विरामे वा" [१।३।५१] इति पत्वम्, विरामश्च सन्ध्यविवक्षया। यदुक्तम्—

" संहितैकपदे नित्या, नित्या धातूपसर्गयोः।
नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते॥"

[सग्रहश्लोकः सि० हे० ल० वृ०पृ०५७९] इति।

अत्र तु वाक्यं वर्तत एव इत्युपपन्नम्। पुनः किं० प्रत्यूहा विघ्नास्त एव शरे जले भवन्तीति "क्वचित्" [५।१।१७१] डे शलभानि कमलानि, तेषां प्लोषे विनाशे रदी–हस्ती–ई रदी हस्तितुल्य इत्यर्थः। पुनः किं० पाति रक्षति क्विपि पानि रक्षकाणि "अङ्कुरं सलिले रोम्णि" [ ] इत्यनेकार्थवचनाद् अङ्कुराणि शरीररोमाणि, तैः असति शोभते क्विपि पाङ्कुराः। तथा न विद्यते शोभा यस्य स अतः. निःश्रीकः इः कामो यस्मात् स अतेः॥ ३६॥

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते॥३७॥
[ सिद्धये[1] वर्धमा[2] नस्ताऽत्ताऽऽम्रायन्[3] न खमण्डली[5]।
प्रत्यूह-शल-भप्लोपे[6] दीप्रदीपाऽकुरायते[8] ॥३७॥]**

[ १ सिद्धया इति तृतीयान्तम् सिद्धा+इ=सिद्धे तस्य तृतीयैकवचनम्। २ इ+वर्ध+म्+आस =इवर्धमास् अनेन पदेन 'मि' इति सूचितम्। इवर्धमा इति प्रथमान्तम्। सिद्धया–इवर्धमा – सिद्धये वर्धमा इति। ३ न+स्तन्=नस्ता इति पदेन 'न' इति सूचनम्। तत न+मि ='नमि' इति नमिजिननामसूचनम्। ४ अत्ता + आम्+ रै+अन् अत्ताम्रायन्। अत्र 'रै+अन् इत्यस्य सन्धौ रायन् तत अत्ताम्+रायन्=अत्ताम्रायन्। नस्ता+अत्ताम्रायन् नस्तात्ताम्रायन्। ५ खमण्डली प्रथमान्तम्। नस्तात्ताम्रायन्+खमण्डली। अत्र ग्रन्थकार 'नख' इत्यस्य आदिभूतं 'न'पदं न साधितवान् तेन ० यन्खमण्डली इत्येव स्यात् परन्तु 'यन्नखमण्डली इति न स्यात्। अत ग्रन्थकारसूचित'अन्न'पदस्य णिजन्तीभावो न कार्य तत '०रै+अन्न' इति जाते 'रायन्न' इति सेत्स्यति ततश्च 'रायन्नखमण्डली' इत्यपि सिध्यति। अर्थे तु न कोऽपि भेद –मेघे अन्नरूप –वायुरूप इति अर्थं सुसगत। ६ प्रति+ऊ+ह+शर+भ+प्लोषे प्रत्यूहशलभ-प्लोषे। ७ दीप्रदीपा तृतीयान्तम् 'सिद्धया' इत्यस्य विशेषणम्। ८ अकु+रायते=अकुरायते अनुस्वारस्य वृद्धौ अङ्कुरायते। ]

व्याख्या–नकार स्तनति वक्ति नामद्वारा क्विपि सौ "नि दीर्घ." [१।४।८५] इति दीर्घे "नाम्नो नोऽनह्न" [२।१।९१] इति नलोपे नस्ता। एतावता 'न' इति सिद्धम्। तथा इकारेण वर्धते अचि इवर्धो यो मकारस्तम् आसते क्विपि इवर्धमा.।

---

१ 'इ' स्थाने 'इव' इति युक्तम्। २ "ता श्रियाम्"– [एकाक्षर०को०सुधा०श्लो० २३] इति वचनात् अत अशोभ निःश्रीक इति यावत्। 'अत' इति रूप प्रथमान्तम् एकवचनम्।

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीपदीपाङ्कुरायते ॥३९॥
[सिद्ध[1] येवर्धमाः[2] नः[3] स्तात्[4] नाऽऽम्[5] रायन्नखमण्ड[6] ली[7] ।
प्रत्यूहशल्[8] अभ[9] ! प्लोपेदी[10] प्रदीपाऽऽङ्कुरायते[11] ! [12] ॥३९॥ ]

[ १ सिद्ध ! योगीन्द्र !-सबोधनैकवचनम् । २ या+ई=ये+व्+अर्ध+मा=येवर्धमा प्रथमान्तम् अनेन 'व्या' इति वर्ण सजात । ३ षष्ठी । ४ क्रियापदम् । ५ न+आम्=नाम् प्रथमैकवचनम् । ६ रै+अञ्ग्=रायञ्ग-रायन्+नख+मण्ड=रायन्नखमण्ड ! सबोधनैकवचनम् । ७ ली -ली-प्रथमान्तम् लकार-सूचकम् । पूर्वोक्तेन 'व्या' शब्देन 'ल' इत्यस्य सयोजने 'व्याल' इति शब्दो निष्पन्न श्रीपार्श्वजिनलाञ्छनरूपस्य व्यालस्य सूचक । विसर्गो न गण्य । ८ प्रत्यूह+शष्=प्रत्यूहशड्=प्रत्यूहशल् प्रथमान्तम् । ९ अ+भ=अभ ! संबोधनम् । १० प्लोप+ईति=प्लोपेति+णिज्-प्लोपेत्+इ+ई=प्लोपेदी प्रथमान्तम् । ११ प्रदीप ! सबोधनम् । १२ अ+अङ्क+उरस्=आङ्कुरा प्रथमैकवचनम् । अनेन 'अङ्क' शब्दो निष्पद्यते तत व्याल+अङ्क='व्यालाङ्क' इति पदम् श्रीपार्श्वजिनसूचकम । १३ अ+ति=अति तस्य सबोधनैकवचनम् अते ! । अङ्कुरास्+अते अत्र सस्य रुत्वे रस्य च यत्वे आङ्कुरायते ।]

व्याख्या—हे सिद्ध ! जितेन्द्रियत्वाद् योगीन्द्र ! । अभ ! नीलवर्णत्वात्, कृष्णनीलयोरैक्यात्, अवद् विष्णुवद् भाति "क्वचित्" [५ । १ । १७१ ] डे अभस्तस्य सं० । तथा हे प्रदीप ! प्रकाशकत्वात् प्रदीपसदृश ! । हे अते ! न विद्यते तिर्गमनं यस्य स अतिस्तस्य सं० । हे रायन्नखमण्ड ! 'रै' शब्दोऽव्ययो दीप्त्यर्थः, रै दीप्तिम् अञ्जन्ति गच्छन्ति क्विपि रायङ्गो दीप्तिमन्तो ये नखास्तैर्मण्डयति भूषयति नतान् इत्यणि रायन्नखमण्डस्तस्य सं० । 'रायङ्' इत्यत्र "पदस्य" [२ । १ । ८९] इति गलोपे, 'निमित्ताभावे०'[1] इति न्यायेन ङत्वाभावे[2] नकारान्तत्वम् । त्वं नः अस्माकं प्रत्यूहान् विघ्नान् 'कष शिष जष झष' [५१८] पठितस्य हिंसार्थस्य 'शष'धातोः शषति हिनस्ति क्विपि 'धुटस्तृतीयः' [२ । १ । ७६] इति षस्य डत्वे ड-लयोरैक्याल्लत्वे प्रत्यूहशल् विघ्नहन्ता स्ताद् भव इति सम्बन्धः । नामविशेषमाह—त्वं किं० या इतिवर्णं ईयते गच्छति क्विपि ये· ईदृशो वकारः अर्धं अंशे यस्य स येवर्धः, ईदृशो मा वाचको यस्य स येवर्धमाः । एतावता 'व्या' इति सिद्धम् । पुन. किं० लकारमिच्छतीति क्यनि "क्यनि" [४ । ३ । ११२] इति ईकारे क्विपि "य्वोः प्वय्०" [४ । ४ । १२१] इति यलोपे ली· । एतावता 'व्याल' इति सिद्धम् तथा अकारेण युक्तम् अङ्क् इति अक्षरम् उरो अग्रे यस्य स आङ्कुराः । अत्र "धुटस्तृतीय·"

१ "निमित्ताभावे नैमित्तिकस्याप्यभाव" इति न्याय हैमहंसीये न्यायसग्रहे २९। 'अगु' धातो उदित 'न्'आगमे 'अनग्' तत गनिमित्तक नस्य ङकार यदा च गकारस्य लोप तदा तन्निमित्तक 'ङ्' अपि निवृत्त तत अन् इति स्थितम् इति भाव । २ ङत्वाभावे इति उचितम् ।

[२।१।७६] इति कस्य गत्वं संज्ञाशब्दत्वान्न कृतम्, कृते तु न ज्ञायते 'अग्' इति वर्तते 'अक्' इति। एतावता व्यालाङ्क' श्रीपार्श्वजिन इत्यर्थः। त्वं पुनः किं० ताश्चारास्तत्सदृशा रागादयोऽपि तास्तेषाम्, आमं रोगं करोति णिजि क्विपि ताम्। तथा प्रुषू प्लुषू दाहे' [५३३] इत्यतः प्लोषणं घञि प्लोषो दाहः ईतिः अजन्यम् उत्पात इति यावत् द्वन्द्वे प्लोषेती[1] ते करोति णिजि क्विपि प्लोषेत् य इः कामस्तम् 'ईरिक् गति-कम्पनयोः' [अदादि ५७] इति कम्पनाद् ईर्तेर्णिगि ईरयति कम्पयति भयभ्रान्तं करोतीति यावत् क्विपि 'धुटस्तृतीयः' [२।१।७६] इति तस्य[2] दत्वे प्लोषेदीः, श्लेषाद् विसर्गलोपः ॥ ३९॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥४०॥
[सिद्धय[1]ेव[2]र्धमा! नः स्तात्[3] ताम्रायं[4] नखम[5]ण्डली[6]।
प्र[7]त्यू[8]हशलभप्लोषे दीप्र[9]दीपाङ्कु रा[10]य! ते[11] ॥४०॥]

[१ सिद्धय। सबोधनैकवचनम्। सिद्ध+या=सिद्धय इति। २ ईवर्धमा। सबोधनैकवचनम्। ई+व्+अ+र्+व+मा = ईवर्धमा। अनेन पदेन श्रीमहावीरजिनवाचक 'वीर'शब्द उत्पादित। न इति षष्ठी। सिद्धय+ईवर्धमा+न=सिद्धये वर्धमान। ३ स्तात् इति क्रिया। ४ ताम्र+क्यङ्=ताम्रायम् प्रथमैकवचनम् 'नखम्' इत्यस्य विशेषणम्। ताम्रायम्–नखम्=ताम्रायन्नखम्। ५ अम्+डल्=अण्डल्। सबोधनम्। ६ इ+इन=ईन्=ई-प्रथमैकवचनम्–'नखम्' इत्यस्य विशेषणम्। अण्डल्+ई=अण्डली। ताम्रायन्नखम्+अण्डली=ताम्रायन्नखमण्डली। ७ 'प्रति' इति 'प्रति' अर्थसूचकम् पदम्। ८ ऊ+ऊह=ऊह+शरभ+प्लोषे रस्य लत्वे ऊहशलभप्लोषे आदौ 'प्रति' पदसयोगे प्रत्यूहशलभप्लोषे। ९ दीप्रदीपाङ्क+उ=दीप्रदीपाङ्को–पश्चात् ह्रस्वत्वे–दीप्रदीपाङ्कु 'नखम्' इत्यस्य विशेषणम्। अत्र अङ्क+ऊ=अङ्को इति जाते पश्चात् ह्रस्वत्वे दीप्रदीपाङ्कु इति साध्यम्। १० राय। सबोधनम्। ११ ते–तव इत्यर्थे षष्ठ्यन्तम्।]

व्याख्या—ईकारेण युक्तं वकारम्, अकारेण युक्तं रकारं च दधाति "आतो डः०" [५।१।७६] इति डे ईवर्धो 'मांङ्क् मान-शब्दयोः' [अदादि–७९] इति शब्दार्थाद् मिमीते क्विपि मा वाचको यस्य स ईवर्धमाः। एतावता वीरः तस्य सम्बो० हे वीर! श्रीवर्धमानः। हे अण्डल्! अः कृष्णस्तत्सदृशं यदनुस्वारवाचकं परब्रह्म तेन 'लड् विलासे' [२५४] इत्यतो ललति विलसति क्विपि अण्डल् तस्य स०। तथा हे सिद्धय! सिद्धा मुक्तास्तान् याति "आतो डः०" [५।१।७६] इति डे सिद्धयस्तस्य स०। तथा "राः स्वर्णे जलदे" [ ] इत्येकाक्षरवचनात् रा मेघः तद्वदाचरति इति "कर्तुः

१ एतद् द्वितीयाया द्विवचनम्–प्लोष+इति=प्लोषेती 'करोति'क्रियाया कर्म। २ 'प्लोषेत्' पदस्य तकारस्य।

क्विप्०" [३।४।२५] इति क्विपि धातुत्वे रायति "पचादौ सर्वधातव" इति [ ] वचनात् पचाद्यचि रायस्तस्य स० हे राय ! मेघसदृश !। कस्मिन् ? अवनं हिंसनम् "भ्यादिभ्यो वा" [५।३।११५] इति क्विपि, "मव्यवि०" [४।१।१०९] इत्यूटि ऊर्हिंसा, तस्यामूहो विचारः स एव र-लयोरैक्यात् शलभः शार्दूलस्तस्य प्लोषे विदारणे। ते तव, ताम्रवदाचरतीति "क्यङ्" [३।४।२६] इति क्यङि "दीर्घश्च्वि०" [४।३।१०८] इति दीर्घे, अचि ताम्रायं ताम्रसदृशं जातौ एकवचने नखं न' अस्मान् प्रति लक्षीकृत्य ई लक्ष्मीः तया इनान् स्वामिन करोति णिजि,क्विपि,तल्लोपे सौ"अनतो लुप्"[१।४।५९] इति तल्लोपे, "नाम्नो नो०" [२।१।९१] इति'न'लोपे, ई लक्ष्मीस्वामिकर्तृ स्तात्-भवतु -इति क्रियासम्बन्ध'। दीप्रो दीप्यमानो यो दीपस्तस्य अङ्क' क्रोडो मध्यमित्यर्थः, तद्वत्। 'अव रक्षण०' [४८९] इति दीप्त्यर्थाद् अवते'--अवति दीप्यते क्विपि ऊटि "क्लीवे" [२।४।९७] इति ह्रस्वे दीप्रदीपाङ्कु ॥४०॥

इति चतुर्विंशतिजिनान् स्वस्वनामकर्षणपूर्वं वर्णयित्वा ऋषभादिशाश्वतजिनचतुष्टयीं तेनैव प्रकारेण वर्णयति-तथाहि-

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥४१॥

[¹सिद्धयेवर्धमा²नः³ स्तात्⁴ ताऽम्रा⁵ऽऽयन्⁶नखम⁷ंडली⁸ ।
⁹प्रत्यूहशल् अभ¹⁰प्लोषेद् ई¹¹प्रदीप¹²ाऽङ्कुरायते¹³ ॥४१॥]

[१ सिद्ध +या+ई+वन्=सिद्धयेवा प्रथमान्तम्। २ ऋधमा प्रथमान्तम् सिद्धयेवा+ऋधमा =सिद्धयेवर्धमा। 'ऋधमा' शब्देन 'ऋ'कार सूचित। ३ न षष्ठी। ४ स्तात् क्रियापदम्। ५ ता+अम्ला=ताम्ला -प्रथमान्तम्-तत ताऽम्रा। ६ ऐ+आ=आया-द्वितीयाद्विवचनम् -आयौ तत -कृदन्तप्रत्ययान्तम्-आयन् प्रथमान्तम्। ७ अ+ख+मम् प्रथमान्तम्। ८ लड्+ई-लडी ल-डयो अक्षरयो व्यत्यये लडी इत्यस्मात् डली प्रथमान्तम्-तत -डली। अत्र ताऽम्रा+आयन्+अखमम्-डली='ताम्रायन्नखमण्डली' इति बोध्यम्। ९ प्रत्यूह+शल्क्=प्रत्यूहशल्। प्रथमान्तम्। १० अ+भ+प्लो+ष्+आ+इत्=अभप्लोषेन् अनेन 'पभ' इति वर्णद्वयसूचनम्। पूर्वोक्तेन 'ऋ'कारेण 'पभ' इत्यस्य सयोगे 'ऋषभ' इति प्रथमस्य शाश्वतजिनस्य नाम निष्पन्नम्। ११ ई+प्र+दि-इत्यस्य कृदन्तरूपम् ईप्रदी तत ईप्रदी। १२ इ+प=इप। १३ अङ्कुर+आयता+ई=अङ्कुरायते प्रथमान्तम्। अत्र 'ई' इति क्विवन्तम् तत 'ई'। अत्र प्रत्यूहशल्+अभप्लोषेन्+ईप्रदी+इप+अङ्कुरायते='प्रत्यूहशलभप्लोषेदीप्रदीपाङ्कुरायते' इति निष्पन्नम्।]

---

१ "नन्दि-ग्रहि-पचादिभ्य ल्यु-णिनि-अच" इति [३।१।१३४] काशिकासूत्रम्। तत्र च "अज्विधि सर्वधातुभ्य पठ्यन्ते च पचादय" इति। अथ ग्रन्थकार सर्वत्र हैम व्याकरण समाश्रितवान् तथाऽपि अत्र इद विधान काशिकागत समाश्रितम्।

व्याख्या–सिद्धां शाश्वतीं यां लक्ष्मीम् 'ईङ्च् गतौ' [१२५२] इत्यत ईयते गच्छति "मन्-वन्-क्वनिप्०" [५।१।१४७] इति क्वनिपि सिद्ध्रयेवा शाश्वतजिनः न· अस्माकं प्रत्यूहान् विघ्नान् शल्कयति खण्डीकरोति क्विपि सौ "पदस्य" [२।१।८९] इति क्लोपे प्रत्यूहशल्द विघ्नखण्डकः स्तात्–भवतु–इति क्रियासम्बन्धः। जिननामाह–सिद्धयेवा कि० ऋकारं दधाति "आतो डो०" [५।१।७६] इति ऋधो मा वाचको यस्य स ऋधमाः पश्चाद् "अवर्णस्येवर्णादिना०" [१।२।६] इति अरादेशः। एतावता 'ऋ' इति सिद्धम्। तथा 'अभ' इति वर्गद्वयं प्लवते गच्छति श्रयति स्वाग्रत इति विचि गुणे अभप्लोः ईदृशं ष्कारम् आङ्पूर्वाद् 'इगृक् गतौ'[१०७५]इति धातोः ऐति गच्छति नामद्वारा श्रयतीति क्विपि तागमे अभप्लोषेत्। एतावता ऋषभः शाश्वतजिन इत्यर्थः। पुन· किं० तया लक्ष्म्या न म्लानिं करोति णिजि म्लानयत्येति[1] क्विपि सौ "नाम्नो नो०" [२।१।९१] इति नलोपे ताऽम्ला। तथा पुनः कि० "आ विधातरि मन्मथे" इत्यनेकार्थवचनात् आ विधाता, तथा "भवेदैर्विष्णुरै शिवः [ ]इत्यनेकार्थवचनात् ऐः शिव·० द्वन्द्वे आयौ इवाचरन् आयन्। तथा अ कृष्ण· खः सूर्यः, मश्चन्द्र. एतेषां समाहारे अखमं, तदिव विष्णु-सूर्य-चन्द्र-सदृशमित्यर्थ। कृष्ण-शिव-विधयोऽप्येकमूर्तित्वात् शिवस्य नित्यत्वात्, नित्या एव मिथ्यादृग्भिर्मन्यन्ते इत्येतेषां साम्यम्। तथा अ-ख-मा अपि शाश्वता एव शाश्वतत्वात् तं०विम्बस्य[2]। पुन· किं०डली· "डलृ्[3] 'विलासे'[२५५] लडति विलसति इति क्विपि लड् विलसत् 'ईङ्च् गतौ' [१२५२] गत्यर्थानां ज्ञानार्थत्वाद् अयनं "कुत्सम्पदादिभ्य·०" [५।३।११४] इति भावे क्विपि ईर्ज्ञानं यस्मिन् स डलीः। पुन· किं० ई लक्ष्मीस्तस्या· प्रदानं प्रदि· "उपसर्गाद् दः कि·" [५।३।८७] इति 'कि' प्रत्यये "इडे-पुसि०" [४।२।९४] इति आकारलोपे ईप्रदि सेवकानां लक्ष्मीप्रदानम् तदिच्छति क्यनि पूर्ववत् क्विबानयनादिकार्ये कृते ईप्रदीः।तथा इ· कामस्तं 'पै शोषणे' [४७] इति पायति शोषयति "आतो ड०" [५।१।७६] इति डे इप·। तथा " अङ्कुरं सलिले" [ ] इत्यनेकार्थवचनाद् अङ्कुर जलं तद्वत् निर्मलं यत् 'इण्क् गतौ' [१०७५] 'गत्यर्था ज्ञानार्था' इति एति जानातीति "तन्-व(व्य)धी०" [५।१।६४] इति णे आयो विद्वान्, तस्य भावे तलि आँयिता[4] ज्ञानित्वं[5] तं दीयते श्रयति क्विपि अङ्कुरायते। पश्चात् त्रयाणामपि विशेषणानां विशेषणसमासे ईप्रदीपाङ्कुरायते ॥४१॥

---

१–'म्लानयति इति क्विपि' इति उचितम्। २ 'तद्विम्बस्य' इति पूर्णम्। ३ 'लड्' इति उचितम् धातोस्तथाभावात्। ४ आयस्य भाव अयना अत अत्र 'आयता' उचितम्। ५ आयता+ई =आयते –'आयते'इत्यस्य साधनाय 'त दीयते' स्थाने 'तद् ईयते' इति उचितम् अन्यथा आयते इति नैव स्यात्।

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥४२॥

[ [1]सिद्धये [2]वर्धमानः [3]स्तात् ता[4]म्रायन् [5]नखमण्डली।
[6]प्रत्यूहशल-भप्लोपे दी[7]प्रदीपाङ्कुरा [8]यते ॥४२॥ ]

[१ चतुर्थ्यन्तम्। २ वर्धमाननामा शाश्वतजिन। ३ क्रियापदम्। ४ ताम्+रायन्=ताम्रायन् प्रथमान्तम्। ५ अ+ख+मण्डली। ताम्रायन्+अखमण्डली=ताम्रायन्नखमण्डली। ६ 'प्रति' शब्द प्रतिकूलताद्योतक। प्रति-ऊ+ह+शल+भ+प्लोपे-सप्तमी। ७ दीप्रन्+ई+प+अङ्कुर++अम्=दीप्रदीपाङ्कुरा प्रथमान्तम। ८ इ+अत्=यत् अस्य चतुर्थ्यां एकवचने यते, एतत् 'सिद्धये' इत्यस्य विशेषणम्।]

व्याख्या-वर्धमानः शाश्वतजिनो नः अस्माकं सिद्धये स्तात्-भवतु-इति सम्बन्धः। किं०तमायां तम्यां वा भवम् भवेऽणि तामम् अन्धकारं तत् करोति णिजि, अन्त्यस्वरादिलोपे क्विपि ताम् यो "रैः स्वर्णे जलदे" [ ] इत्येकाक्षरवचनात् रा मेघस्तद्वदाचरति 'कर्तुः क्विप्०" [३।४।२५] इति क्विपि, धातुत्वे शतरि ताम्रायन्। कस्मिन् ? प्रत्यूहशलभप्लोपे। दीप्रदीपाङ्कुरा० 'अव रक्षण०' [४८९] इति गत्यर्थाद् अवते अवनं क्विपि ऊर्ज्ञानं तद् घ्नन्ति क्विपि "अहन्पञ्चम०" [४।१।१०७] इत्यत्र हनो वर्जनाद् दीर्घाभावे ऊहानि ज्ञानावरणीयकर्माणि तान्येव 'शल् चलने' [९८४] इति शलन्ति इतस्ततो गच्छन्ति अचि शलानि गत्वराणि भानि नक्षत्राणि, तेषां प्लोपे विनाशे लक्षणया तिरोधाने इत्यर्थ। मेघैरपि नक्षत्राणि तिरोधीयन्ते इत्येवं साम्यम्। पुनः किं० खानि इन्द्रियाणि, तद्ग्राह्याः शब्द-रूपादयो विशेषा अपि खानि, तेषां मण्डलं समूहो विद्यते यस्य स "अतोऽनेकस्वरात्" [७।२।६] इनि खमण्डली, पश्चान्नञा निषेधे अखमण्डली। पुनः किं० दीप्रन्ती दीप्रं किञ्चन वस्तु तद्वदाचरन्ती या ई शोभा ता पाति रक्षति डे दीप्रदीपः। तथाऽङ्कुरो नवोद्गतलतादेः प्ररोहो जरामरणरहितत्वेन सर्वदैव नवीनत्वात् तद्वदसति शोभते क्विपि अङ्कुरा विशेषणसमासे दीप्रदीपाङ्कुरा.। सिद्धये किं० इ काम, तं न तायते न पालयति क्विपि नञो अत्वे इना सह यत्वे अग्रे "य्वो प्वय्०" [४।४।१२१] इति यलोपे चतुर्थ्याम् "लुगातोऽनापः" [२।१।१०७] इत्यालोपे, यते ससारक्षयहेतवे चारित्ररूपायै इत्यर्थः ॥४२॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥४३॥

[ 'सिद्धयेवर्द्ध ! मोऽऽनैस्तात् ताऽम्राऽऽयन् ! नख ! मण्डलीं । प्रत्यूह शलभ प्लोषेदीप्रदीपाङ्कुरा यते ॥४३॥ ]

[१ सिद्ध+या+इ+वा+ऋद्ध=सिद्धयेवर्द्ध। सबोधनैकवचनम्। २ 'मा' निषेधवाची तस्य 'उह 'इत्यनेन अन्वय –त्व मा उह –मा पीडय इति भाव । ३ आन्+अम्=आन अनेन 'आन्' इति वर्णद्वय सूचितम। ४ त+अद्द=तात् इति प्रथमान्तम् अथवा सबोधनम्। ५ ता+अ+म्ला+ड=ताऽम्ल !=ताऽम्र! सबोधनम्। सिद्धयेवर्द्ध ! इत्यस्य विशेपणम् । ६ ई+विच्=ऐ, अ+ऐ=ऐ+अन्=आयन् सबोधनम् अनेन 'अन' इनि वर्णद्वयसूचनम् तत आन्+अन='आनन' इति पदम् 'चन्द्रानन'नामकस्य शाश्वतजिनस्य सूचक जातम्। ७ नख ! संबोधनम। ८ मण्डलीं। अनुस्वारस्य अगणने मण्डली, अर्थस्तु द्वितीयाया बोध्य, अस्य श्लोकस्य उत्तरार्धस्थस्य द्वितीयपादस्थितस्य 'यते ' इत्यनेन पदेन सह 'मण्डली' पदस्य अन्वय । तत 'यते मण्डलीम्' इति आशयो लब्ध । ९ प्र+दय्+ति= =ऊन्=प्रत्यू प्रथमाया एकवचनम्। उह इति 'उह्' धातो अद्यतन्या द्वितीयैकपुरुषैकवचने क्रिया-पदम् प्रत्यू+उह =प्रत्यूह विसर्गस्य अगणने प्रत्यूह इति ज्ञेयम्। १० शष्+अभा=शडभा डस्य लत्वे शलभा अस्य षष्ठ्या एकवचने शलभ विसर्गस्य अगणने शलभ इति। इदम् 'यते ' इत्यस्य विशेषणम् ११ प्र+उषा+इत्=प्रोषेत्+ई=प्रोषेदी रस्य लत्वे विसर्गाभावे च प्लोषेदी+इ+प्रदीप+अङ्कुर+अस्= प्लोषेदीप्रदीपाङ्कुरा तत अभीष्ट सिध्यति । यते इति षष्ठ्यन्तम्, विसर्गाभावे यते इति ।]

व्याख्या—आन् इति वर्णद्वयेन असति शोभते क्विपि आनस्तस्य संबो० हे आनः ! एतावता आन इति सिद्धम्। तथा ईकारम् ईयते गच्छति विचि गुणे ऐः ईदृशम् अनं इति वर्णद्वयं यस्मिन् स आयन् तस्य स० हे आयन्! एतावता आनन इति सिद्धम्। "ते लुग् वा" [३।२।१०८] इति पूर्वपदस्य लोपे आननः **श्रीचन्द्राननः** शाश्वत-जिनस्तस्य सबो० हे चन्द्रानन ! तथा हे सिद्धयेवर्ध ! सिद्धा शाश्वती या लक्ष्मीस्ताम् 'इण्क् गतौ' [१०७५] इति एति गच्छति "मन्-वन्-क्वनिप्०" [५।१।१४७] इति वनि सिद्धयेवा शाश्वतजिनः स चासौ ऋद्धश्च सिद्धयेवर्धस्तस्य सं०। हे ताम्र ! ता ज्ञानरूपा लक्ष्मीः तया न म्लायति "क्वचित्" [५।१।१७१] इति डे ताम्रस्तस्य स०। तथा 'उख नख' [६४] इति गत्यर्थात् नखे· 'गत्यर्था ज्ञानार्थाः' इति नखति जानाति तत्त्वा-तत्त्वमिति अचि नखो ज्ञानवान् तस्य स० हे नख! त्वं यतेः जातावेकवचने यतीनां जितेन्द्रियाणां मण्डलीं श्रेणीं प्रति लक्षीकृत्य मा उह· मा अर्दये[1] इत्यर्थः। रूपसिद्धिस्त्वेवम्-'उहृ तुहृ दुहृ अर्दने' [५६१] इति उहेर्धातोरद्यतन्या· [2]सिचि 'ऋृदिच्छ्वि'-[३।४।६५] इति अङ्प्रत्यये माङा योगे वृद्ध्यभावे इति। प्रत्यू प्रपूर्वाद् 'दयि दान-हिंसा-दहनेषु' [७९९] इति 'दयि' धातोः प्रदयनं क्तौ यलोपे "अत·" [४।३।८२] इति अल्लोपे

१ 'अर्दय' इति अथवा 'अर्दये ' इति उचितम्। २ 'सिवि' इति उचितम्। अद्यतन्या द्विती-यैकपुरुषैकवचने 'सिवू' प्रत्यय न तु 'सिच्' इति।

प्रत्तिर्हिंसा, ताम् ऊनयति क्षयं नयति इति क्विपि, तल्लोपे सौ "नाम्नो नो०"[२।१।९१] इति नलोपे प्रत्यू । त्वं किं० तास्तस्करास्तान् 'अड्डि हिंसाऽतिक्रमयोः' [६७४] इति-अड्डते हिनस्तीति क्विपि सौ 'पदस्य' [२।१।८९] इति टलोपे तात् । यतेः किं० शवन्ति हिंसन्ति जीवानिति क्विपि शपो हिंसकास्तेषु न भान्ति न शोभन्ते क्विपि शत्रभाः पश्चात् "वुटस्तृतीय" [२।१।७६] इति षस्य डत्वे डलयोरैक्याल्लत्वे शलभाः षष्ठ्यामेकवचने "लुगातोऽनाप" [२।१।१०७] इत्यालोपे शलभः श्लेषाद् विसर्गलोपः । पुनरुवं किं० प्लोषे दीप्रदीपाङ्कुराः । प्रकृष्टा उषा रात्रिः प्रोषा पूर्णिमा तस्याम् इन्धनं 'कुत्सम्पदादिभ्यः'०[५।१।११४] क्विपि इत् दीपन यस्य स प्रोषेत् चन्द्रस्तं स्वोद्दीपकतया ईयते गच्छति क्विपि प्लोपेदी ईदृशो य इः कामः स एव प्रदीपः तस्मिन् 'अङ्कुरं सलिले' [ ] इत्यनेकार्थवचनाद् अङ्कुरं जलं तद्वत् 'असी गत्यादानयोश्च' [९३२] इति चानुकृष्टदीप्त्यर्थादसे भाति इति क्विपि प्लोपे दीप्रदीपाङ्कुराः । यथा जलं प्रदीपं क्षयं नयति, एवं त्वमपि काममित्यर्थ ॥४३॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥४४॥

[ [1]सिद्ध ये[2]वर्ध ! [3]मानस्तात् [4]ताम्रायन्न[5]खम् [6]अण्डली ।
[7]प्रत्यूहशल् [8]अभ [9]प्लोषे ऽ[10]दीप्रदीपां [11]कुराय ते[12] ॥४४॥ ]

[ १ सिद्ध प्रथमान्तम् । सिद्ध +एवर्ध=सिद्धयेवर्ध ! । २ एवर्ध ! सबोधनम् । आ+इ=ए । व्+र्-व=वर्ध । ए+वर्ध !=एवर्ध । अनेन व्+आ=वा, र्+इ=रि' एवरीत्या 'वारि' पदम् सूचितम् । ३ मा+नस्+ता+अत्-मानस्तात् द्वितीयैकवचनम् 'नखम्' इत्यस्य विशेषणम् । ४ तमी=तम्-र +अ+ई=ताम्री+आ=ताम्रा+यत्=ताम्रायत् 'नखम्' इत्यस्य विशेषणम् । ५ नखम् द्वितीयैकवचनम् । ६ अ+ण्=अण्+डल्=अण्डल् संबोधनम् । अनेन 'ण' वर्ण सूचित । नखम्+अण्डल्=नखमण्डल् । अत्र ग्रन्थकार 'नखमण्डल्' इत्येव साधितवान् 'नखमण्डली' इति पदं न साधितवान् तत. 'ई' शब्द अत्र समाविष्ट कार्य तेन च 'नखमण्डली' इति साध्यम् । चित्रकाव्यत्वेन अत्र 'ई' शब्द. पूरणीय । ७ प्रति+ऊ+ह=प्रत्यूह+शल्क्-प्रत्यूहशल्क् तत प्रत्यूहशल् प्रथमान्तम् । ८ अ+भा= अभा तस्य षष्ठ्येकवचने अभ । इद ते-तव-इत्यस्य विशेषणम् । अत्र विसर्गो न गण्य । ९ प्लु=प्लो+ षे=प्लोषे ! एकारान्त सबोधनम् अनेन 'षे' इति सूचितम् पूर्वोक्तरीत्या सूचित 'वारि+षे+ण' इत्येषा वर्णाना सयोगे 'वारिषेण' इति शाश्वतजिनस्य नाम सूचितम् । प्रत्यूहशल्+अभ+प्लोषे= प्रत्यूहशलभप्लोषे । १० अदीप्रदीपाम् ह्यस्तन्या प्रथमपुरुषैकवचने रूपम् दीप्र=दीप्रत्+ई+पा+अम्= दीप्रदीपाम् अट आगमे-अदीप्रदीपाम् इति क्रियापदम् । कु+रै=कुरै-अत्र 'कुराय' इति पदसाधनाय 'अ' पूरणीय -कु+रै+अ=कुराय ! सबोधनम् । १२ ते-षष्ठीविभक्ति -'तव' अर्थसूचक पदम् । ]

व्याख्या—आकारेण, इकारेण यथासङ्ख्यं युक्तौ यौ व च र् च वरौ दधाति "आतो डः०" [५।१।७६] इति डे एववर्धस्तस्य स० हे एवर्ध !। एतावता 'वारि' इति सिद्धम्। तेषां 'प्लुङ् गतौ' [५९८] प्लवते गच्छति विचि प्लोर्गच्छन् 'षे' इति वर्णो यस्य नाम्नि स प्लोषे. तस्य सं० हे प्लोपे ! "अदेतः स्यमोर्लुक्" [१।४।४४] 'वारिषे' इति सिद्धम्। तथा अकारेण युक्तो यो ण् णकारस्तेन 'लड विलासे' [२५४] लडति विलसति क्विपि ड-लयोर्व्यत्यये सं० हे अण्डल !। एतावता वारिषेणः तस्य स० हे **वारिषेण** ! शाश्वतजिन !। तथा हे कुराय ! कौ पृथिव्याम् उपचारात् तत्स्थलोकेषु "राः स्वर्णे जलदे धने" [ ] इत्येकाक्षरवचनाद् "आ रायो व्यञ्जने" [२।१।५] इत्यात्वे रा धनं तदेव कुरायस्तस्य सं०। यथा लोकानां धनरूपलक्ष्मीप्रद इत्यर्थः। अहं ते तव नखं जातावेकवचने नखानि "नखमुखमधिकाङ्ग०" [हैमलिङ्गानुशा०पुंनपुं० श्लो० १२] इति लिङ्गानु०वचनात् नपुंसकत्वे अर्थात् पदनखानि। 'षिधू गत्याम्' [३२०] गत्यर्थात् कर्त्तरि क्ते सिद्धो गतः संश्रितः सन् अदीप्रदीपां दीप्यत इत्येवंशीलं दीप्रं दीपनशीलं किञ्चिद् वस्तु तद्वदाचरति "कर्तुः क्विप्०" [३।४।२५] इति क्विपिधा तुत्वे शतरि दीप्रन् प्रतापवत्तया सूर्यादिदीप्रवस्तुवदाचरन् यः ई पृथ्वीं पाति रक्षति क्विपि ईपा राजा तद्वदाचरम् अदीप्रदीपां नृपसदृशोऽभवमित्यर्थः। अत्र दीप्रदीपा इति शब्दादाचारेऽर्थे क्विपि ह्यस्तन्या अस्मदर्थैकवचने अम्वि रूपसिद्धि.। नखं किं० माः चन्द्रः अर्थात् अष्टम्याः तद्वत् 'णसि कौटिल्ये' [८५१] इति धातोः क्विपि भावे तलि नस्ता कौटिल्यम्। 'अत सातत्यगमने' [२७९] अतति गच्छति क्विपि मानस्तात् अष्टमीचन्द्रवदग्रे कुटिलमित्यर्थ'। पुनः किं० ताम्रायत् तमां रात्रिम् आख्याति तस्यामेव प्रकटीभावित्वात् णिजि क्विपि तम् रात्रीवु(धु)र्यो र' कामः कर्मधारयसमासे तम्रस्तस्य इयं "तस्येदम्" [६।३।१६०] अणि ताम्री सा चासौ आ लक्ष्मीश्च ताम्रा ताम्। 'यतण् निकारोपस्कारयोः' [१७३८] इत्यतो णिचोऽनित्यत्वात् तदभावे यतति निराकरोति क्विपि ताम्रायत् कामश्रीहृद् इत्यर्थ'। पुनः किं० प्रतिकूला या ऊहिंसा तां जहाति त्यजति "आतो डः०" [५।१।७६] इति डे प्रत्यूहा दयापरजनाः तेषां शन्कं शरणं करोति णिजि क्विपि प्रत्यूहशल्। ते किं० अ' कृष्णस्तद्वद् भाति क्विपि अभा', तस्य षष्ठ्यां "लुगातोऽनाप." [२।१।१०७] इत्यालोपे अभ. शाश्वतत्वात् कृष्णसदृशस्य। लोके कृष्णोऽपि शाश्वत एवेति तत्साम्यम् ॥४४॥

एवं शाश्वतजिनचतुष्टयं वर्णयित्वा शाश्वतं श्रीशत्रुञ्जयतीर्थं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥४५॥

[सिद्ध ! येव धर्मा नः स्तात् ताम्रायन्न-खमण्डली ।
प्रत्यूह ! शलभप्लोषे ! दीप्रदीपाङ्कुरायते ॥४५॥]

[१ सिद्ध !-'शत्रुञ्जय'पर्वतस्य प्रसिद्ध नाम-संबोधनम् । २ या+इव=येव-लक्ष्मीसमान इति आशय । ३ ऋद्ध+मा=ऋद्धमा द्वितीयाबहुवचनम् । 'प्रति' पदस्यापि अनेन पदेन सबन्ध । ४ न षष्ठी । सिद्ध+येव+ऋद्धमा+न =सिद्धये वर्धमान इति जातम् । ५ स्तात् क्रियापदम् । ६ ताम्र+अस्=ताम्रास् प्रथमैकवचनम् । ७ अन्न+खमन्+ड+ली अन्न-खमण्डली । ताम्रास्+अन्न-खमण्डली -सन्धौ ताम्रायन्नखमण्डली इति निष्पाद्यम् । ८ प्रति+ऊ+ह=प्रत्यूह ! संबोधनम् । ९ शलभ+प्लोषि=शलभप्लोषि । अस्य सबोधने शलभप्लोषे ! अत्र 'शलभ'पदेन शरभ बोध्य । १० दीप्र+दीप+अङ्कुर+आयति=दीप्रदीपाङ्कुरायति । अस्य संबोधने दीप्रदीपाङ्कुरायते !।]

व्याख्या-"सिरिसिद्धसेहरो सिद्धपव्वओ सिद्धराओ अ ।" [ ] इति समयवचनात् सिद्धपर्वतः श्रीशत्रुञ्जय., तस्य "ते लुग् वा" [३।२।१०८] इत्युत्तरपदलोपात् सिद्धस्तस्य सं० हे सिद्ध ! शत्रुञ्जय !। हे दीप्रदीपाङ्कुरायते ! दीप्रो दीपस्तत्सदृशा अङ्कुरा नानाविधौषधीनां प्ररोहास्तेषाम् आयतिः श्रेणिर्विस्तारो यत्र, स दीप्रदीपाङ्कुरायतिस्तस्य स० । "शत्रुञ्जये हि प्रदीपवद् दीप्यमाना नानाविधौषधय सन्ति" [ ] इत्येवंवर्णनम् । तथा हे शलभप्लोषे ! र-लयोरैक्यात् शलभा अष्टापदास्तेषां 'प्लुषूग् स्नेह-सिंचन०' [१५६२] इति स्नेहनार्थात् प्लुषेः "इकिस्तिव्०" [५।३।१३८] इति इप्रत्यये प्लोषिः स्नेहो यस्मिन् स शलभप्लोषिः, तस्य स० । पर्वते हि शरभा वर्ण्यन्ते इति । तथा हे ऊह ! अवति दीप्यते कर्तरि क्विपि ऊर्दीप्यमानो "हो हस्ते दारुणि"[ ]इत्येकाक्षरवचनात् हो दारु यस्मिन् स ऊह', तस्य सं० ।शत्रुञ्जये हि औषधीनां दीप्यमानानि सप्रभावाणि काष्ठानि सन्ति,औषधीस्थानत्वात् । त्वं नः अस्माकं ऋद्धा समृद्धा मा लक्ष्मी' ऋद्धमा' प्रति लक्षीकृत्य स्तात्-भव-इति क्रिया-कारकमीलनम् । त्वं किं०ताम्रं धातुविशेष' उपलक्षणात् सुवर्णाद्यपि, तेन असति शोभते क्विपि ताम्राः। शत्रुञ्जये हि सुवर्णादिसिद्धिहेतवो रसकूपिकाः सन्ति । त्वं किं० सेवकानां या ई लक्ष्मीरिव लक्ष्मीसम इत्यर्थ'। पुन' किं० अन्नोत्पत्तिहेतुत्वात् कारणे कार्योपचारात् अन्नं मेघस्तथा खे नमसि मङ्गन्ति गच्छन्ति क्विपि खमङ्ग. खेचरा. द्वन्द्वे अन्न-खमङ्गां मेघ-खेचराणाम् "डः शिवे ध्वनौ" [ ] इत्येकाक्षरवचनात् डो ध्वनिर्गर्जितरूप' परस्परालापरूपश्च तं लीयसे श्लिष्यसीति क्विपि अन्न-खमण्डलीः। समासे पदान्तत्वात् "पदस्य" [२।१।८९] इति 'मङ्ग्' इत्यस्य गलोप.। पर्वते हि मेघा वर्ण्यन्ते, सिद्धपर्वतत्वात् खेचरा अपि च स्यु' ॥४५॥

श्रीशत्रुञ्जयतीर्थं वर्णयित्वा श्रीगिरनारतीर्थं वर्णयति–तथाहि–

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥४६॥

[ [1]सिद्धयेवर्धमानस्ता[2]ऽऽत्ताऽम्रा[3]यन् न ख[4]-मं डली[5] ।
प्र[6]त्यूहशल्-अ[7]भप्लोषेद्–'ई[8]प्रदीपांऽकुराय ते[10] ॥४६॥ ]

[ १ सिद्धयेवा+ऋद्धमान=सिद्धयेवर्धमान इति । २ स्त+आत्त=स्तात्त । सिद्धयेवर्धमान+स्तात्त=सिद्धयेवर्धमानस्तात्त ! सबोधनैकवचनम् । ३ अम्लायत् इति क्रियापदम् तस्य च 'न' इत्यनेन अन्वय –न अम्लायत् इति भाव । लस्य रत्वे अम्रायत् । ०स्ताऽऽत्त+अम्रायत्=स्तात्ताम्रायत्+न=स्तात्ताम्रायन्न इति । ४ ख–म प्रति इत्येव 'प्रति'पदम् ख-मपदेन सयोज्यम् । ख-मम् इति द्वितीयान्तम् । ५ 'लडी' इति पदस्य व्यञ्जनव्यत्यये 'डली' इति निष्पाद्यम् । ६ प्रति+ऊह+शड्=प्रति+ऊहशल्=प्रत्यूहशल् । एतच्च कर्तृपद प्रथमान्तम् 'न अम्लायत्' इति क्रियया अन्वितम् । ७ अ+भ+प्लोष+इन्ध्=अभप्लोषेत् प्रथमान्तम् । ८ ई+प्रदीप=ईप्रदीप ! सबोधनम् । ९ अ+कु+राय=अकुराय । अत्र 'राय' इति 'रा' धातो 'क्त्वा'प्रत्ययान्त संबन्धकभूतकृदन्तम्–रात्वा-तत कु+रात्वा=कुराय । अ+कु+राय=अकुराय । अनुस्वारयुक्ते उच्चारणे अंकुराय इति । १० ते 'तुभ्यम्' अर्थे चतुर्थ्यन्तम् । एव प्रत्यूहशल्+अभप्लोषेद्+ईप्रदीप+अकुराय+ते=प्रत्यूहशलभप्लोषेदीप्रदीपाकुरायते इति सजातम् । ]

व्याख्या–'षिधू गत्याम्' [३२०] क्ते सिद्धो गतो यां लक्ष्मीं कामक्रीडार्थम् ईयते गच्छति क्वनिपि येवा विष्णुस्तस्य ऋद्धो महान् मानः अहङ्कारो यस्मात् स सिद्धयेवर्धमानः श्रीनेमि स एव 'स्तन शब्दे' [३२३] इति स्तनति धर्मदेशना करोति क्विपि स्ता धर्मदेशकः सविशेषणस्य विशेष्यत्वविवक्षया सिद्धयेवर्धमानस्ता तेन आत्तः अङ्गीकृतस्तस्य सं० हे सिद्धयेवर्धमानस्तात्त ! **श्रीगिरनारतीर्थ !** । तथा हे ईप्रदीप ! ई पृथिवी तस्यां प्रदीप इव प्रदीपः त्रिभुवनान्तरतमःक्षयकारित्वात् तस्य सं० । सम्प्रदानविवक्षया ते तुभ्यं कु ईषत् 'रांक् आदाने'[१०६९]–दानेऽपि च केचित्–इति आदानार्थत्वाद् राणं पूर्वं "प्राक्काले" [५।४।४७] इति क्त्वा, तस्य "अनञः क्त्वो यप्" [३।२।१५४] इति यपि कुराय, पश्चात् नञा योगे अकुराय सम्पूर्णमङ्गीकृत्य । ऊहं शटति जानाति क्विपि टस्य डत्वे, ड-लयोरैक्याल्लत्वे ऊहशल् विचारज्ञो मनुजो न अम्लायत्–कर्मावलेपे न म्लान इत्यर्थः । किं०मनुजः अ कृष्णस्तस्माद् भवति "क्वचित्" [५।१।१७१] डे अभः कामः तस्य प्लोष दाह तेन 'लोकृ तर्क० [१७६६] इति पठितभासार्थो' इति चुरादेर्णिचि इन्धयति दीप्यते क्विपि अभप्लोषेत् कामसुखमुक्त इत्यर्थः । पुनः किं० आवश्यकार्थस्य गम्यत्वात्, 'लड जिह्वोन्मन्थने' [१०३६] इत्यतो णिगि घटादेर्ह्रस्वत्वे, अवश्यं लड-

यति उन्मन्थयति इति "गिन् चावश्यकाधमर्ण्ये" [५।४।३६] इति णिनि ल-डयोर्ग्ये-त्यये डगी तिरस्कर्ता। कथम्? प्रति लक्षीकृत्य, किं? खः सूर्यः मश्चन्द्रः, समाहारे ख-मं रवि-चन्द्रम्, अर्थात् प्रतापेन यशसा च ॥४६॥

इति श्रीशत्रुञ्जय-रैवतकाभिधतीर्थद्वयं वर्णयित्वा साधारणजिनं वर्णयति-तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥४७॥

[[1]सिद्धयेवर्धमानस्तात्[2]ता म्लायन्[3] [4]न खमण्डली[5]।
[6]प्रत्यूहशल-[7]भप्रोषे [8]दीप्रदीपा[9] कुंरा[10] यते[11] ॥४७॥]

[१ सिद्ध+या+इ=सिद्धये+वर्ध+मान =सिद्धयेवर्धमान प्रथमान्तम्। २ ता+अत्+तायृ=तात्ता प्रथमान्तम। ३ म्लायन्–लस्य रत्वे म्रायन्–प्रथमान्तम्। ४ 'म्रायन्' इत्यनेन सह 'न' शब्दस्य अन्वय. 'न म्लायन्' इति भाव। ५ ख+मण्डल+इन्=खमण्डली प्रथमान्तम्। ६ प्र+त=प्रती–प्रथमान्तम्। अनेन 'प्त' शब्द सूचित। ७ ऊह+श+लव=ऊहशलव् प्रथमान्तम्। ८ भ+प्र+उपेन=भप्रोपेन्=भप्रोपे। ऊहशलव्+भप्रोषे-अस्य सन्धौ–ऊहशलभप्रोषे। प्रती+ऊहशलभप्रोषे=प्रत्यूहशलभप्रोषे ९ दीप्रदीप+आ–तृतीयैकवचनम्—दीप्रदीपा। १० कु+आस्=कुरा। अनेन 'आ' वर्ण. सूचित। अनेन 'आ' इत्यनेन पूर्वोक्तस्य 'प्त' इत्यस्य संयोगे 'आप्त' इति पदेन साधारणजिननाम-सूचनम्। ११ न+ता=अता+ईर्=अतेर्=अते –अत्र विसर्गो न गण्यः–अते-प्रथमान्तम्। कुरास्+अते=यते। अनुस्वार उच्चारणीय।]

व्याख्या–कु शब्दो वाचकोऽस्ति। किं० आकारेण असति शोभते क्विपि आ. अधुना 'आ' इति सिद्धम्। पुनः किं० प्रती प्रकारं राति–आदत्ते–"आतो डः०" [५।१।७६]इति डे प्रः, ईदृशस्तकारो विद्यते यस्य स प्रती "अतोऽनेकस्वरात्"[७।२।६] इनि, इयता 'आप्त' इति सिद्धम्। आप्तो जिनोऽस्तीत्यर्थः। किं०न ता अता अल-क्ष्मीस्ताम् ईरयति कम्पयति क्विपि अते–श्लेषाद् विसर्गाभावः। पुन किं० 'वृधूङ् वृद्धौ' [९५७] घञि–वर्धो वृद्धिः। तथा 'मीगश् हिंसायाम्' [१५१२] भावे अनटि "मिग्मीगोऽखलचलि" [४।२।८] इत्याकारे मानं हिसा। वर्धश्च मानं च वर्ध-माने या लक्ष्मीश्च इ कामश्च ययो सिद्धे सम्पन्ने ययो कमला-कामयोर्वर्ध-माने आनुपूर्व्या यस्मात् स सिद्धये ०मानः–लक्ष्मीवृद्धिकृत्, कामक्षयकृच्चेत्यर्थः। पुनः किं० "ता मही -लक्ष्म्यो" [ ] इत्यनेकार्थवचनात् ता पृथिवी ताम् अतन्ति गच्छन्ति क्विपि तातो मनुष्यास्तान् तायते इति क्विपि "य्वोः प्वय्०" [४।४।१२१] इति यलोपे तात्ता। पुन. किं० र-लयोरैक्यात् न म्लायन् सदैव बाह्यान्तरमलवियुक्तत्वात्। पुनः किं० खवत् सूर्यसमं 'ते लुग् वा" [३।२।१०८] इति पूर्वपदलोपात् मण्डल विद्यते यस्य

सः "अतोऽनेकस्वरात्" [७।२।६] इनि खमण्डली । पुनः किं० ऊहं विचारं श्यन्ति आतो डे ऊहशा रागादय. तेषां लवं छेदनं करोति णिजि क्विपि णिजः स्थानित्वाद् वलोपाभावे ऊहशलव् पश्चाद् घोषवति परे "व्योः" [१।३।२३] इति व्लोपः । पुनः किं० भैर्नक्षत्रै र-लयोरैक्यात् प्रः प्रकृष्टो य उषेनश्चन्द्रस्तं करोति णिजि क्विपि, तल्लोपे सौ "दीर्घङ्याब्०" [१।४।४५] इति तल्लोपे, "नाम्नो नो०" [२।१।९१] इति नलोपे भप्लोषे । कया ? दीप्रदीपा दीप्यमानकान्त्या ॥४७॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥४८॥

[सिद्धयेवर्धमानः[1] स्तात्[2] ताम्रा[3]यन्[4] न[5] खमण्डली[6] ।
[7]प्रत्यूहशल्-अभ[8] [9]प्लोषे दीप्रदीपा[10]ङ्कुरा[11] यते[12] ॥४८॥]

[१ सित+हयेव्+आ+ऋद्ध+मान=सिद्धयेवर्धमान -प्रथमान्तम्-अत्र वकारस्य 'व' इति उच्चारणम् । २ 'स्तात्' इति क्रियापदम् । ३ ताम्र+अस्=ताम्रास्-प्रथमान्तम् । ४ इ+अन्त=यन्त् =यन् प्रथमान्तम् । ताम्रास्+यन्=ताम्रायन् इति समस्तम्। ५ न इति षष्ठी । ६ ख+मण्डल+ इन्=खमण्डली प्रथमान्तम् । ७ प्रत्यूह+शल्+अभ =प्रत्यूहशलभ । अत्र 'प्रत्यूहशल्' इति प्रथमान्तम् । अभ इति षष्ठ्यन्तम् अपि ग्रन्थकारसूचनानुसारेण चतुर्थ्यन्तं ज्ञेयम् । 'यते' इत्यस्य विशेषणम् । अत्र 'अभ' इत्यस्य विसर्गो न गण्य । ८ अ+भा=अभ । ९ प्लोषे सप्तम्यन्तम् । १० दीप्रदीप्+आम्=दीप्रदीपाम् षष्ठीबहुवचनम् । ११ कु+रा =कुरा. प्रथमैकवचनम् । ०दीपाम्+कुरा इत्यस्य ०दीपाङ्कुरा यते-इत्यस्य च संधौ-०दीपाङ्कुरायते इति । १२ यत्+यते चतुर्थ्यन्तम् ।]

व्याख्या-खवत् सूर्यसदृशं मण्डलं भामण्डलं खमण्डलं तद् विद्यते यस्य सः "अतोऽनेकस्वरात्" [७।२।६] इनि खमण्डली जिनो नखेति विसर्गाभावात् नः अस्माकम् यतनं "क्रुत्-सम्पदादिभ्य०" [५।३।११४] इत्यत्र यते. पाठात् क्विपि यत् उद्यमस्तस्यै स्तात्-भवतु-इति क्रियासम्बन्धः । किं० सिध्यतीति क्विपि सित् सम्पद्यमानो यो 'हिंट् गति वृद्धयोः' [१२९५] इत्यतो "युवर्ण-वृ-द०" [५। ३।२८] इति अलि हयो ज्ञानं तम् ईप्सतीति क्विपि सौ "पदस्य" [२।१ ८९] इति सलोपे "धुटस्तृतीय" [२।१।७६] इति वत्वे सिद्धयेव् । पुनः किं० आ समन्तात् ऋद्ध. "अवर्णस्येवर्णादिना०" [१।२।६] इति अरि अर्ध 'मनूयी बोधने' [१५०७] घञि मान अवबोधो यस्य स अर्धमान. । पुन' किं० ताम्रम् उपलक्षणत्वात् सुवर्णादि तद् अस्यति क्विपि ताम्रा । इ कामस्तम् अन्तयति क्षयं नयति क्विपि सौ "पदस्य" [२।१।८९] इति तलोपे यन् पश्चाद् विशे-

पणसमासे ताम्रायन्। पुनः किं० प्रत्यूहान् प्रतिकूलवितर्कान् शा ...यति खण्ड-यति क्विपि प्रत्यूहशस्त्र। यते किं० न भाति क्विपि अभास्तस्यै अभः। कस्मिन्? प्लोषणं प्लोषो दाहो हिंसेत्यर्थ' तस्मिन्। नः किं० दीप्रो यो दीपस्तद्वदाचराम इति क्यङि क्विपि आमि दीप्रदीपाम्। जिनः किं० कुं पृथ्वीं राति—दत्ते—क्विपि कुराः अर्थात् सेवकानामिति ॥४८॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥४९॥
[सिद्धये[1] वर्ध[2]! माऽऽनः[3] स्तात्[4] ता–ऽऽम्[5] रायन्नख[6]! मण्डली[7]।
प्रत्यूहशलभ[8] प्लोपे[9] दीप्रदीपाऽङ्कुरा य-ते[10] ॥४९॥]

[१ चतुर्थ्या एकवचनम्। २ वा+ऋद्ध=वर्ध! सबोधनैकवचनम्। ३ मा+आन+य=माना–षष्ठ्या एकवचने–माऽऽन 'अते' इत्यस्य विशेषणम्। अत्र ग्रन्थकारः "अश्चासौ त्वं च अत्वम्, तस्मै अते विष्णुसदृशस्य तव सिद्धये" इति निर्दिशन् चतुर्थी-षष्ठ्यो अभेदं विवक्षति इति गम्यते। अन्यथा-'तस्मै अते' स्थाने 'तस्य अते' इति समुचितम्। ४ स्तात् इति क्रिया। ५ ता+अमि=णिच्=ता-ऽऽम्–प्रथमैकवचनम्। ६ रायत्+नख=रायन्नख! सबोधनम्। ७ मण्डली प्रथमैकवचनम्। ८ प्र+ति+ऊ+ऊह+श+प्रत्यूहश+लभा=प्रत्यूहशलभः प्रथमैकवचनम्। ९ प्र+उषा+ई+प्रोपे+दीप्रदीप+प्रोषेदीप्रदीप+अङ्कुर+अस्=प्रोषेदीप्रदीपाङ्कुरास्–प्रथमैकवचनम्। प्रत्यूहशलभ प्रोपेदीप्रदीपाङ्कुरास्+अते–प्रत्यूहशलभ प्लोपे दीप्रदीपाङ्कुरा य-ते। १० अ+त्वत्=अते. षष्ठ्या एकवचनम्।]

व्याख्या—वा एवार्थे। हे ऋद्ध! इभ्य! तथा "रैः स्वर्णे जलदे धने" [ ]इति एका-क्षरवचनात् रै. स्वर्णम् तद्वदाचरन्तः क्विपि शतरि रायन्तः स्वर्णसदृशा नखा यस्य स रायन्नखस्तस्य सं० हे ०ख! भामण्डलशब्दस्य "ते लुग् वा"[३।२।१०८]इति पूर्वपद-लोपात् मण्डलं भामण्डलं विद्यते यस्य "अतोऽनेकस्वरात्" [७।२।६]इति मण्डली जिन. अः कृष्ण इव अः। अश्चासौ त्वं च अत्वं तस्मै अते विष्णुसदृशस्य तव सिद्धये मुक्तये स्तात्—भवतु—इति सम्बन्ध'। तव कि० माया लक्ष्म्या आन इव जीवितमिव आचरतः क्यङि क्विपि यलोपे षष्ठ्यां "लुगातोऽनाप" [२।१।१०७]इत्याकारलोपे मान' लक्ष्म्या

१ अत्र 'प्रत्यूहशल' इति पदं निष्पाद्यम् अत शलयति खण्डयति इति समुचितम्। ज्वलादिगणे धातुपाठे 'शल गतौ' [९८४] धातुर्विद्यते तत 'शलयति' इति भविष्यति। आदर्शे तु 'शा . यति' इति रिक्तमध्याक्षरं लिखितं विद्यते। २ 'न भाति' इति प्रक्रियया 'अभा' इति आकारान्त स्यात् तस्य चतुर्थ्यां विभक्तौ एकवचनं 'अभै' इति उचितम् परन्तु ग्रन्थकारेण' 'अभ' इति प्रदर्शितम् एतस्य सगति शब्दाना पृथक्करणरूपे विवेचने विहिता।

जीवितसदृशस्येत्यर्थ । जिनः किं० प्रत्यूहशलभः । प्रपूर्वात् 'तयि णयि रक्षणे च [७९७] इत्यतो भावे क्तौ "य्वोः प्वय्०"[४।४।१२१]इति यलोपे, "अतः" [४।३।८२] इति अलोपे प्रत्तिः रक्षणं जीवानामित्यर्थः । तथा 'अव रक्षण०' [४८९] इति गत्यर्थाद् भावे क्विपि ऊर्ज्ञानम्, ऊहो विचारः शं सुखम्, तेषां द्वन्द्वे प्रत्यूहशं करोति णिजि, अचि प्रत्यूहशलभा प्राप्तिर्यस्य स प्रत्यूहशलभः । पुनः किं० र-लयोरैक्यात् प्रकृष्टा "अनड्वाह्यनड्वाहुषा' [कां०४, १२६५] इति मौलावचनाद् उषा गौः प्रोषास्तस्या ई दुग्धादिलक्ष्मीस्तद्वद् दीप्रो दीपन घञि दीपो दीप्तिर्यस्य तत् प्लोषे दीप्रदीपं यत्"अङ्कुरं सलिले रोम्णि रुधिरेऽभिनवोद्गमे' [हैम-अने० सं० त्रिस्वरकां० श्लो०१११८] इति अनेकार्थवचनाद् अङ्कुरं रुधिरं तेन असति शोभने क्विपि प्लोषे दीप्रदीपाङ्कुराः, ततो रोर्यत्वे सिद्धम् । जिनानां रुधिरं गोदुग्धसदृशं वर्ण्यते । पुनः किं० ता लक्ष्मीः 'अम् गतौ' [३९२] "इकिस्तिव् स्वरूपार्थे" [५।३।१३८] इति 'इ'प्रत्यये अमिः ज्ञानं तौ करोति णिजि क्विपि ताम् । अग्रे व्यञ्जनस्य विद्यमानत्वाद् अनुस्वारस्य प्राप्तावपि असन्धिविवक्षया तदभावः ॥४९॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥५०॥
[ सिद्धये वर्धमानः स्तात् ताम्राऽऽयत् नखमण्डली ।
प्रत्यूहशलभ ! प्लोषेदी ! प्रदीपाङ्कुरा यते ॥५०॥]

[१ सिद्धये चतुर्थ्यन्तम् । २ वर्धमान् इत्यस्य वर्धमान इति षष्ठयन्तम् ततश्च 'यते' पदस्थितस्य 'ते'इति षष्ठयन्तस्य विशेषणम् । ३ क्रियापदम् । ४ ताम्र+आ+आयम्=ताम्राऽऽयत्–'नखमण्डली' इत्यस्य विशेषणम् प्रथमान्तम् । ५ प्र+ति+ऊ+हस+लभा=प्रत्यूहशलभ ! संबोधनम् । ६ प्र+उष+इ+प्रोषे+दा=दी=प्रोषेदी =प्लोषेदी -सम्बोधनम् । ७ प्रदीप+अङ्कुर+अस्=प्रदीपाङ्कुरास् -प्रथमान्तम्–दीपाङ्कुरा । ८ अ+ते=अते । अत्र 'अ'-कार केवल पादपूरणार्थ । दीपाङ्कुरास्+अ-ते दीपाङ्कुरायते । ]

व्याख्या—र-लयोरैक्यात् प्रकर्षेण उषति दहति जगदिति "नाम्युपान्त्य०" [५।१।५४] इति के प्रोषो दाहकृत् य इः कामस्तं द्यसि छिनत्सि क्विपि परमते "ईर्व्यञ्जनेऽयपि" [४।३।९७] इति ईकारे प्लोषेदी तस्य स० । हे जिन ! । हे प्रत्यूहशलभ ! प्रकृष्टा तिर्ज्ञानम् ऊ दीप्तिस्तयोः श-सयोरैक्यात् हसः प्रकाशः तस्य लभा प्राप्तिर्यस्य तस्य स० । अ इति पादपूरणे । ते तव नखमण्डली नखश्रेणिः नः अस्माकं सिद्धये मोक्षाय स्तात्—भवतु—इति क्रियासम्बन्धः । न इत्यत्र चित्रत्वाद्

१ हैमनाममाला । २ "अङ्कुरो रोम्णि सलिले रुधिरे अभिनवोद्गमे" इति पाठ अनेकार्थसङ्ग्रहे।

विसर्गलोप । कि० नखाग्रेणि: ताम्रा रक्तानुरागिणी या आ लक्ष्मी-दीप्त्यादिका ताम् आयच्छते विस्तारयतीति क्विपि "गमां क्वौ" [४।२।५८] इति मलोपे "ह्रस्वस्य त: पित्०" [४।४।११३] इति तोऽन्ते ताम्रायत् । पुन: ता० दीप्यते इत्येवंशील: "स्म्यजस–हिंस–दीप-कम्प–कम–नमो र:" [५।२।७९] इति रे दीप्रो दीपनशीलो यो दीप: प्रदीपस्तस्याङ्कुर: प्ररोहस्तद्वदसति शोभते क्विपि दीप्रदीपाङ्कुरा: । अत्र पादपूरणे अकारे अग्रे सति "रोर्य:" [१।३।२६] इति यत्वे कुराय इति रूपसिद्धि: । ते तव कथं० "वर्धमानो वीरजिने स्वस्तिकैरण्ड-विष्णुषु" [हैम० अनेकार्थस० चतु स्वरकां श्लो० १५६१] इति अनेकार्थवचनाद् वर्धमानस्तद्वदा-चरति "क्यङ्" [३।४।२६] इति क्यङ्प्रत्यये "दीर्घश्च्वि०" [४।३।१०८] इति दीर्घे वर्धमानायते इति क्विपि "य्वो: प्वय्०"[४।४।१२१] इति यलोपे पश्चात् षष्ठ्यां "लुगातोऽनाप:" [२।१।१०७] इत्यालोपे वर्धमान: स्वस्तिकवत् त्रिजगतां मङ्गल-हेतु:–इत्यर्थ: ॥५०॥

सिद्धये वर्धमान: स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥५१॥
[1]सिद्धयेवर्धमा[2]नस्ताऽऽत्ताऽऽम्[3] रायन्[4] न[5] खम्[6] अण्डली[7] ।
[8]प्रत्यूहशल् ! अभप्लोऽषेद् [9]ईप्रदीपाङ्कुराय ते[10] ॥५१॥

[ १ 'सिद्धे' इति 'सिद्ध्' इत्यस्य चतुर्थ्यां एकवचने सिद्धे। २ आ+ई+वन्= एवा+ऋद्ध=एवर्ध। ०मान=मान्, एवर्ध+मान्। एवर्धमा–प्रथमैकवचनम्। सिद्धे+एवर्धमा=सिद्धयेवर्धमा । ३ नस्+ता =नस्ता+अत्ता+आम=नस्ताऽऽत्ताम्–प्रथमैकवचनम्। ४ रै+अतृ=रायन् । सिद्धयेवर्धमा+नस्तात्= सिद्धयेवर्धमानस्तात् । ५ न निषेधवाची । ६ खम् द्वितीयैकवचनम् 'रायन्' इत्यस्य कर्म । ७ अ+अ +लङ्=डल्+ई=अण्डली खम्+अण्डली–खमण्डली । ०ताम्+रायन्+न+खमण्डली=ताम्रायन्नख-मण्डली । ८ प्रत्यूह+शल्=प्रत्यूहशल् सम्बोधनैकवचनम् । अ+भ+प्लु+ड=अभप्ल –प्रथमैकवचनम् अभप्ल +अषेत्=अभप्लोऽषेत् । 'अषेत्' इति क्रियापदम् । ९ ई+प्रदीपाङ्कुराय 'ते' इत्यस्य विशेष-णम्–चतुर्थ्यां एकवचनम् प्रत्यूहशल्+अभप्लोऽषेद्+ईप्रदीपाङ्कुराय=प्रत्यूहशलभप्लोषेदीप्रदीपाङ्कुराय । १० ते–तुभ्यम् । ]

व्याख्या–प्रत्यूहान् विघ्नान् 'शठ हिंसा-संक्लेशयो:' [२२२] इति हिंसार्थान् शठे शठति हिनस्ति क्विपि "धुटस्तृतीय" [२।१।७६] इति ठो डत्वे, ड लयोरैक्याल्लत्वे प्रत्यूहशल् ! जिन !। ते तुभ्यम् । 'अं ब्रह्मपरम्' [ ] इत्ये-काक्षरात् अं, अ: कृष्णो व्यापकत्वेन तत्सदृशं यत् शिर:स्थानुस्वारवाच्यं परं

१ 'वर्धमान:' इत्यस्य षष्ठ्यन्तत्वेन साधितत्वात् अत्र 'मङ्गलहेतो' इति युक्तम् ।

ब्रह्म तस्य "इकिश्तिव्०" [ ५।३।१३८ ] इति इप्रत्यये, ल-डयोर्व्यत्यये अण्डलिः युक्त्या स्थापनविलासः तम् 'ईङ्च् गतौ' [१२५२] ईयते गच्छति क्विपि अंडली: ब्रह्माऽद्वैतवादी पुरुषो न अपेत्—न अयति—कर्मबाहुल्यात् तुभ्यं नोपलक्षयतीत्यर्थः । किं० अः कृष्णः तेन भान्ति शोभन्ते "क्वचित्" [ ५।१।१७१ ] डे अभाः मिथ्यात्विकाः तान् प्लवते गच्छति "क्वचित्" [ ५।१।१७१ ] डे अभप्ल मिथ्यादृक्प्रिय इत्यर्थ.। पुनः किं० आ समन्तात् ईयन्ते जानन्ति तत्त्वातत्त्वमिति "मन् वन्-क्वनिप्०" [५।१।१४७] इति क्वनिपि एवानो विज्ञाः तेषु विशेषधीमत्तया ऋद्धा. समृद्धास्तेषु मध्ये मानं मौग्ध्येन अभिमानं करोति णिजि क्विपि सौ " नाम्नो नो०" [२।१।९१] इति नलोपे वर्धमा विज्ञेषु पण्डितम्मन्य इत्यर्थः। पुनः किं० 'कैं गैं रैं शब्दे' [३८] इति रैधातोश्शतरि रायन् वद्वदेन् किं० खं शून्यम् 'एकमेव शून्यं वर्तते नान्यत्' इति वदन्नित्यर्थः। पुन. किं०'न (ण)सि कौटिल्ये' [८५१] भावे तलि नस्ता कौटिल्यम् । तथा 'अट्टि हिंसाऽतिक्रमयोः' [६७४] इति हिंसाऽर्थात् क्विपि "पदस्य" [ २ । १ । ८९ ] इति टलोपे, भावे तलि अत्ता हिंसा, तथा आमा रोगाः द्वन्द्वे तान्—निजाश्रितानां संसारकोटरे पातकत्वात्—करोति णिजि क्विपि म्वादेरभावात् "मो नो म्वोश्च" [ २ । १ । ६७ ] इति नत्वाभावे नस्तात्ताम् । तुभ्यं किं० ² सिद्धिं मोक्षं निजसेवकानां करोति णिजि क्विपि चतुर्थ्यां सिद्धे । पुन· किं० ईप्रदीपाङ्कुराय—ई पृथ्वी तस्यां प्रदीपाङ्कुराय दीपसदृशाय ॥ ५१ ॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥ ५२ ॥
[ सिद्धये [1] वर्धमान [2] ! स्तात् [3] ताम्रायन्नख [4] ! मण्डली [5] ।
प्रत्यूहशलभप्लोषे [6] दीप्रदीपाङ् [7] कुरायते [8] ॥५२॥ ]

[ १ सिद्धये चतुर्थ्यन्तम् । २ वा+ऋद्ध+मान=वर्धमान ! सबोधनैकवचनम् । अत्र 'वा' 'एव'अर्थे । ३ स्तात्—भवतु—एव । ४ ताम्रा+यत्+नख =ताम्रायन्नख ! सबोधनम् । ५ मण्डल +च्वय=मण्डली =मण्डली । ६ प्र+त्ति+ऊह=प्रत्यूह+शलभ+प्लोषे=प्रत्यूहशलभप्लोषे सप्तम्या एकवचनम् ७ दीप्रदीपाम्—षष्ठीबहुवचनम्—दीप्र+दीप+क्यङ्+क्विप् =दीप्रदीपा+आम्—दीप्रदीपाम् + कुरा० सन्धौ दीप्रदीपाङ् कुरा० । ८ कु+र+अस्=कुरास्+अता=कुरायत+इ=कुरायते षष्ठ्या एकवचनम् । ]

---

१ अत्र तस्य ' इति पदस्य अनन्तरम् 'अ' इत्यनेन सह 'लड' धातो सम्बन्धे—इति सुयुक्तम्। धातोर्निर्देश विना 'इ'प्रत्यय कस्मात् व्यत्ययश्च केषाम् ? इति । २ तद्वद्वदन्,—इति उचितम् अर्थात् रायन् इव वदन् । ३ 'भावे जायमान प्रत्यय. नाम्न एव भवति, न धातोः । अत अत्र नसते इति 'न.' इति क्विबन्त नाम निष्पाद्यम् पश्चात् नसो भावः इत्येव तलि नस्ता ' इति निर्देश उचिततर ।

व्याख्या—वा एवार्थे । हे ऋद्धमान ! ऋद्धः समृद्धः प्रमाणातीतो 'बुधिं मनिंच् ज्ञाने' [१२६३] इति मननं मानो ज्ञानं यस्य स ऋद्धमानस्तस्य सं० हे ऋद्धमान ! जिन !। ताम्रायन्नख ! ताम्रवदाचरणं कर्तुः क्विपि धातुत्वात् "शंसि प्रत्ययात्" [५ । ३ । १०५ ] इ[ति] 'अ' प्रत्यये ताम्रा ताम्रवदाचरणम् ताम् 'इग्क् गतौ' [१०७५] इत्यतो शतरि यन् गच्छन् नखं यस्य स ताम्रायन्नखः—तस्य सं० त्वम् । प्रपूर्वाद् 'दयि दान-गति-हिंसा-दहनेषु' [७९९] इति, अतः क्तौ " य्वोः प्वय्०" [४ । ४ । १२१] इति यलोपे "अतः" [४ ।३। ८२] इति अल्लोपे "अघोषे प्रथमोऽशिटः" [१ । ३ । ५०] इति दस्य तत्वे प्रत्तिर्हिंसा तस्याम् ऊहो विचारः स एव शलभः पतङ्गः तस्य प्लोषो दाहस्तस्मिन् प्रदीपो दीपस्तद्वदाचरन्ति क्यङि क्विपि षष्ठ्या बहुवचने आमि"लुगातोऽनापः"[२।१।१०७]इति आलोपे [1]प्रदीपाम्—प्रदीपवदाचरताम्—दयावताम्—इत्यर्थः —पुरुषाणां सिद्धये स्तादेव—भव एव—इत्यर्थः । त्वं किं० "मण्डलः भुजङ्गभेदे परिधौ शुनि द्वादशराजके" [ हैम० अनेका० सं० त्रिस्वरकां० श्लो० १२७५] इति अनेकार्थवचनाद् मण्डलं श्वानमिवाचरति गणयति "आधाराच्चोपमानादाचारे" [३ । ४ । २४] इति क्यनि"क्यनि"[४।३।११२] "इति ईकारे क्विपि "अतः"[४।३।८२] इति अल्लोपे "य्वोः प्वय्०"[४।४।१२१]इति यलोपे मण्डलीः । कस्य ? कु. पृथ्वी तस्यां रो वैश्वानरः तद्वद् असति शोभते क्विपि कुराः पृथ्वीजनमनःसन्तापकत्वात् । ईदृशी अता अलक्ष्मीर्यस्मात् स कुरायतः, ईदृशो यः इः कामः तस्य कुरायतेः—अयमर्थः—यथा श्वा तुच्छपराक्रमो जनैर्गृहाद् बहिर्निष्कास्यते तथा त्वयाऽपि कामः शरीराद् बहिरित्यर्थः ॥ ५२ ॥

इति वृत्तषट्केन सामान्यजिनं वर्णयित्वा प्रसिद्धं वर्णयति—तथाहि —

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥५३॥
[[1]सिद्ध ! ये[2]वर्ध ! मा[3]नस्ताऽऽत्ताऽम्रा य[4]न् न[5] ख[6]मण्डली ।
प्रत्यूहशलभप्लोषे दीप्र ! दीपाङ्कुरा[7]ऽयते[8] ॥५३॥ ]

[१ हे सिद्ध !। २ हे येवर्ध ! इ+वन्=एव । ई+एव=येव+ऋद्ध=येवर्ध !। ३ मनस्त=मानस्त +आत्त+अम्ला =मानस्तात्ताऽम्रा प्रथमैकवचनम् । ४ यन्—प्रथमैकवचनम्—इ+अत्—यत्—यन् । ५ न. -अस्माकम् । ६ख मण्डलीप्रथ मान्तम् । ७ दीप+अङ्कुर=दीपाङ्कुर तत. नामधातुरूप क्रियापदम् पञ्चम्या द्वितीयपुरुषैकवचनम् । ८ दीपाङ्कुर+अयते दीपाङ्कुरायते, प्रथमान्तम् । अय+तेव् =अयते इति एकारान्तं पदम् । ]

१ 'दीप्रदीपाम्' इति युक्तम् ।

व्याख्या–हे येवर्ध ई मुक्तिरूपा लक्ष्मीस्ताम् 'इणक् गतौ' [१०७५] इत्यतो यन्ति गच्छन्ति "मन्-वन्-क्वनिप्०" [५।१।१४७] इति वनि "नामिनो गुणः०' [४।३।१] इति गुणे येवानो मुक्तास्तेषु ऋद्धः समृद्धस्तस्य स० तथा हे सिद्ध ! हे दीप्र ! दीप्यते इत्येवंशीलो दीप्रस्तस्य सं० । त्वं नखेत्यथ(त्र) विसर्गलोपे नः अस्माकं प्रत्यूहा विघ्नास्त एव शलभाः पतङ्गास्तेषां प्लोषे दाहे दीपाङ्कुर प्रदीपवदाचर इत्यर्थः । त्वं किं० 'इणक् गतौ' [१०७५] इत्यतः अयनं 'युवर्ण-वृ-द०" [५।३।२८] इति अलि अयो ज्ञानम् तेन 'तेवृङ् देवृङ् देवने' [८१६] इत्यतो तेवते क्रीडति विचि "य्वोः प्वय्०" [४।४।१२१] इति यलोपे अयतेः । अत एव किं० खं ज्ञानम्, तस्य मण्डलं समूहो विद्यते यस्य स खमण्डली "अतोऽनेकस्वरात्" [७।२।६] इनि । त्वं पुनः किं० मनश्चित्तं तदेव मुक्त्यादिसुखापहारकत्वात् तश्चौरः "तस्येदम्" [६।३।१६०] इति अणि वृद्धौ मानस्तं यत् आदानम् "क्लीबे क्तः" [५।३।१२३] इति क्ते आत्तं ग्रहणं वशीकरणमिति यावत्, तेन तस्मिन् वा न म्लायति क्विपि म्लानास्ताताम्राः योगीन्द्रः स एव । 'इंक् स्मरणे' [१०७४] इत्यतो(तः) एति स्मरति शतरि "इको वा" [४।३।१६] इति यत्वे यन् स्मृतिकारको यस्य स मानस्तात्ताम्रायन् योगिध्येय इत्यर्थः । अत्र यस्मिन्नित्यस्य विशेषणत्वेऽपि विशेषविवक्षया न पूर्वनिपातः ॥५३॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥५४॥
[ [1]सिद्धयेव[2]र्धमानस्ता[3]ऽत्ता [4]म्रायन् [5]न [6]खमण्डली ।
[7]प्रत्यूहशल[8]अभप्लो [9]षेदीप्र [10]! दीपाङ्कुराय[11] [12]ते ॥५४॥]

[ १ सिद्ध' इति प्रथमान्तम् । सिद्ध'+एवर्ध० सिद्धयेवर्ध० । २ इ + वन्–एवन्+ऋद्ध+ =एवर्ध+मान =एवर्धमान प्रथमान्तम् । अत्र 'भवतु' क्रिया गम्या । ३ अद्+तृ=अत्ता । त+अत्ता =ताऽत्ता । ४ म्लायन्=म्रायन् । 'न' इत्यस्य अनेन 'म्लायन्'पदेन सबन्ध अर्थात् न म्लायन् इति । ५ न निषेधवाची । ६ खमण्डली–ख+मण्डल+इन्=खमण्डली प्रथमान्तम् । ७ प्रत्यूह+शल =प्रत्यूहशल–प्रथमान्तम् । ८ अ+भू+प्र+उ =अभप्रो =अभप्लो· षष्ठ्या एकवचनम् । ९ ष+ई=षे +दीप्र=षेदीप्र ! 'षे' इति एकारान्त पदम् । १० दीप्र ! । ११ दीपाङ्कुराय चतुर्थ्या एकवचनम् । १२ ते तव स्तात् –भवतु–इति क्रिया अध्याहार्या ।]

व्याख्या–हे षेदीप्र ! "षः श्रेष्ठे" [ ] इत्येकाक्षरवचनात् षा श्रेष्ठा या ई लक्ष्मीस्तया दीप्रो दीपनशीलः इभ्यस्तस्य सं० । सिद्धो मुक्त' । घञि दीपनं दीपः–कान्ति.–तस्य

१ अत्र 'ह' वर्ण अनुपयोगी अत 'येवर्ध' इति स्यात् अथवा हे येवर्ध ! इति स्यात् ।
२ अत्र 'मानस्तात्ताऽम्रा' इति पाठ उचित ।

अङ्कुरः प्ररोहः तस्मै दीपाङ्कुराय तेजःप्ररोहाय ते तव 'भवतु' इति क्रियाशेषः । सिद्धः किं० 'इण्क् गतौ' [१०७५] एति जानाति "मन्-वन्-क्वनिप्०" [५।१।१४७] इति वनि एवानो विचक्षणास्तेषु ऋद्धः समृद्धो 'मानि(न)ण् पूजायाम्' [१९६९] इत्यतो घञि मानः पूजा यस्य स एवर्धमानः । पुनः किं० "तस्तु तस्करे" [] इत्येकाक्षरवचनात् ताश्चौराः तान् अत्ति भक्षयति तृचि तात्ता चौरान्तकः—इत्यर्थः—सेवकानां तेभ्यो रक्षकत्वात् । पुनः किं० न म्लायन् न म्लानीभवन्नित्यर्थः । यतः ख ज्ञानम्, तेन मण्डलं बिम्बं विद्यते यस्य स मण्डली सूर्यः स इव -यथा सूर्यो विश्वद्रष्टा तथा ज्ञानेनायमपि । पुनः किं० प्रत्यूहा विघ्नाः तान् 'शठ कैतवे च' [२२२] इति चानुकृष्टहिंसाऽर्थात् शठे· शठति हिनस्ति क्विपि प्रत्यूहशठ् ध्यातॄणां विघ्नहर इत्यर्थः । ते किं० अः कृष्णस्तस्माद् भवति "क्वचित्" [५।१।१७१] डे अभः कामः तस्मिन् प्रकृष्टः उः ईश्वरः तस्य अभप्लोः श्लेषाद् विसर्गलोपः । यथा ईश्वरेण कामो दग्धस्तथाऽनेनापीत्यर्थः ॥५४॥

इति वृत्तार्थद्वयेन **सिद्धं** वर्णयित्वा क्रमागतं तृतीयपरमेष्ठिनम् आचार्यं वर्णयति तथाहि—

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥५५॥**

**[[1]सिद्ध ! [2]ये ! [3]वर्ध ! [4]मा [5]न· [6]स्तात् [7]ता[8]ऽऽम्रायन्न ! [9]खमण्डली ।**
**[10]प्रत्यूहशलभ ! [11]प्रोषेदीप्रदीपाङ्कुरा [12]यते ॥५५॥]**

[१ स्+इद्ध=सिद्ध ! सम्बोधनम् । अनया 'स्+इद्ध' इति व्युत्पत्त्या 'स्' सूचित । २ इ+ए =ये एकारान्त सम्बोधनम् अनेन 'इ'कार सूचित· । ३ ऊ+अय्=वय् । र्+ध=र्ध, वय्+र्ध इत्यनयो सन्धौ वर्ध ! सम्बोधनम् । अत्र 'वय्'पदेन 'ऊ'कार· सूचित तथा 'र्ध'पदेन 'र' सूचनम् । एव च 'स्+ऊ+र्+इ' इत्येतेषा वर्णाना सयोगे 'सूरि' इति पद निष्पादितम् । ४ म+अस्=मा प्रथमान्तम् । ५ न षष्ठी । ६ 'स्तात्' इति क्रियापदम् । ७ त+आम्ला=ताम् प्रथमान्तम् । ८ र+आयत्=रायन्=रायन् सम्बोधनम् । अत्र ग्रन्थकार 'न'पदसाधनं विस्मृतवान् तच्च सविद्-वाचक'न' पदेन पूरणीयम तत 'ताम्रयन्नख' इति ज्ञेयम् । ९ खम·डल+णिन्=खमण्डली प्रथमान्तम् । १० प्र+दय्+ति=प्रत्ति+ऊ+ह+श+लभा=प्रत्यूहशलभ ! सम्बोधनम् । ११ प्र+उषा+ई= प्रोषे+दीप्रदीपाङ्कुर+अस्= प्रोषेदीप्रदीपाङ्कुरा —प्रथमान्तम् । अत्र 'प्रोषे' इत्यस्य 'प्लोषे' बोध्यम् । १२ यते सप्तम्या एकवचनम् । ]

व्याख्या—'स्' कारेण इद्धो दीप्तस्तस्य सं० हे सिद्ध ! एतावता स् इति सिद्धम् । तथा ऊकारम् 'अयि गतौ' [७९०] इत्यतो अयते गच्छति विचि "य्वोः प्वय्०" [४।४।१२१] इति यलोपे व । विचि तु व्यञ्जनकार्यानित्यत्वे पश्चाद् घोषवात

1—अत्र ईदृग पाठ समुचित —"य्वो प्वय्०" [४।४।१२१] इति विचि व्यञ्जनकार्याऽनित्यत्वे यलोपो न जात किन्तु घोषवति परे (अर्थात् 'वय्+र्ध' इति अवस्थायाम्) "य्वो" [१।३।२३] इति यलोपे व, एतावता 'सू' इति सिद्धम् ।

परे "व्योः" [१।३।२३] इति यलोपे वय् । एतावता सूरिः इति सिद्धम् । तथा रकारं दधाति "आतो डः०" [५।१।७६] इति डे हे र्घ । एतावता सूर् इति सिद्धम् । तथा इकारम् एति गच्छति ये तस्य सं० हे ये । एतावता सूरि. इति सिद्धम, तस्य सं० हे सूरे । आचार्य ।। तथा "रो ध्वनौ तीक्ष्णे वैश्वानरे कामे" इति [ ] वचनात् र. कामस्तम् आङ्पूर्वाद् 'यतण् निकारोपस्कारयो.' [१७३८] इत्यतो णिचोऽनित्यत्वे आयतति पराभवति क्विपि रायत्—कामविध्वंसिका—[नः] संविद् यस्य स तस्य स० हे रायन्न । तथा 'दयि दान [गति]-हिंसा-दहनेषु च' [७९९] इत्यतः प्रपूर्वाद् भावे क्तौ "य्वोः प्वय्०" [४।४।१२१] इति यलोपे परमते "अत." [४।३।८२] इति अल्लोपे, "अघोषे प्रथमोऽशिटः" [१।३।५०] इति दस्य तत्वे प्रत्तिर्हिंसा ताम् 'अव रक्षण'० [४८९] इति करणार्थादवेः, अवति करोति क्विपि ऊटि प्रत्यूर्हिंसाकारको "हो हस्ते दारुणि शूलिनि" इति[ ]एकाक्षरवचनात् हो हस्तो येषां ते प्रत्यूहा हिंसकास्तान् श्यति तनूकरोति "आतो डो०" [५।१।७६] डे प्रत्यूहशलभा प्राप्तिर्यस्य तस्य सं० हे प्रत्यूहशलभ । त्वं खं ज्ञानम्, तस्य कारणं तर्क-लक्षणादिशास्त्रमपि खम् तस्य मण्डलं समूहस्तं अवश्यं करोति इति णिजि "णिन् चावश्यकाधमर्ण्ये" [५।४।३६] इति णिनि च खमण्डली लक्षणादिशास्त्रकारको नोऽस्माकं स्तादिति क्रियासम्बन्धः । त्वं किं० तास्तस्करास्तत्सदृशा रागादयोऽपि तेपाम्—आङ्पूर्वात् तायते.[२] "उपसर्गादातः" [५।३।११०] इत्यडि –आम्लां म्लानिं करोति णिजि क्विपि ताम् । त्व पुनः किं० "मश्चन्द्रे शिरसि" []इति एकाक्षराद् मो मस्तकं तद्वदसति शोभते क्विपि मा मस्तकसदृशो मुख्य इत्यर्थः । कस्मिन् ? यते जितेन्द्रियलोके । पुनः किं० प्रकृष्टां उषा रात्रिस्तस्याम् ई शोभा तया दीप्रो यो दीपाङ्कुरस्तद्वद् असति शोभसे क्विपि प्रोषेदीप्रदीपाङ्कुरः प्रकाशकत्वात् ॥५५॥

इत्येकार्थेन आचार्यं वर्णयित्वा चतुर्थपरमेष्ठिनमुपाध्यायं वर्णयति—तथाहि—

१ अत्र 'प्रत्यूहशा लभा' इति पाठ समुचित । २ 'म्लायते' इति युक्तम् अन्यथा 'उपसर्गादातः' इत्यस्य प्रवृत्तिरेव न स्यात् ।

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥५६॥
[ [1]सिद्धये [2]वर्धमानः [3]स्तात् [4]ताम्रायन् [5]न [6]खमण्डली[7]।
प्रत्यूहशलं[7]भप्लोषेदीप्रदीपाऽऽङ् [8] [9]कुरायते ! ॥५६॥ ]

[ १ चतुर्थीविभक्त्या एकवचनम् । २ वर्धमानः प्रथमान्तम् । ३ क्रियापदम् । ४ ताम्रायन् प्रथमान्तम् । ५ न. षष्ठीवहुवचनम् । ६ ख + मण्डलीम् = खमण्डलीम् । अन्त्य. अनुस्वारो न . गण्य. तत ०मण्डली । ७ प्रत्यूहशलभप्लोप + ई + दीप्रदीप = प्रत्यूहशलभप्लोषेदीप्र-दीप ! संबोधनैकवचनम् । ८ आ + अ = आम् प्रथमैकवचनम् । ९ कु + रै + ण = कुरायः कु + राय + तेवृ = कुरायते ! सवोधनैकवचनम् । ]

व्याख्या— "कुस्तु भूमौ शब्दे च" [ ] इत्येकाक्षरवचनात् कुः शब्दः तस्य कारणम् उपचाराद् व्याकरणादिशास्त्रमपि कु' तस्य ये 'कैं गै रैं शब्दे' [२८] इत्यतो रै-धातो रायन्ति पठन्ति "तन्-व्यधि०" [ ५ । १ । ६४ ] इति णे रायाः पाठिनः शिष्याः—इत्यर्थः—तैः । 'तेवृङ् देवने' [८१६ ] इत्यतः तेवते विलसति क्विपि कुरायते' तस्य सं० हे कुरायते ! उपाध्याय ! । तथा प्रत्यूहाः प्रतिकूला ऊहास्त एव शलभाः पतङ्गास्तेषां प्लोषो विनाशस्तस्मिन् ई शोभा तया दीप्रो यो दीपः प्रदीपः स इव तस्य सं० हे प्रत्यूहशलभप्लोषेदीप्रदीप ! । त्वं नखेत्यत्र श्लेषाद विसर्ग-लोपे नः अस्माकं खं ज्ञानं तस्य मण्डली श्रेणी तां 'वर्धन(ण्) छेदन-पूरणयोः' [१६६१] इत्यतो णिचोऽनित्यत्वाद् अभावे वर्धति पूरयतीत्येवंशीलो' 'वयः-शक्ति-शीले" [ ५ । २ । २४ ] इति शनैर्वर्धमानः पूरयन् सन् सिद्धयेः शास्त्रादिकव्युत्पत्तये स्तात्—भव—इति क्रियासंवन्धः। त्वं किं० ताम्रं धातुभेदः उपलक्षणत्वात् सुवर्णादि तत् संसारहेतु-भूतत्वेन अस्यन्ति क्षिपन्ति ताम्रासो ये यतयो मुनयस्तानाख्याति पठनार्थमिति णिजि क्विपि ताम्रायन् । त्वं पुनः किं० आ समन्तादनुस्वास्वाच्यं परब्रह्म यस्य स आम् ॥ ५६ ॥

- इति उपाध्यायं व्यावर्ण्य पञ्चमं परमेष्ठिनं सर्वसाधुं वर्णयति—तथाहि—

१ 'सिद्धये' इति चतुर्थ्या एकवचनम् अत अत्र 'सिद्धये' इति उचितम् । २ 'आम्' इति उचितम् ।

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥५७॥
[ सिद्धये[1] वर्धमा[2]! नः[3] स्तात्[4] ताम्रा[5]ऽयन्नखमण्डली[6][7]।
प्रत्यूहशलभप्[8] लो[9]ऽषेदीप्रदीपाङ्कुरा[10] यते[11]! ॥५७॥ ]

[ १ सिद्ध + या = सिद्धया। अस्य सप्तम्येकवचने सिद्धये। २ वर्धमान –वर्धमान्-वर्धमा – प्रथमैकवचनम्। ३ न षष्ठीवहुवचनम्। ४ स्तात् क्रियापदम्। ५ ता + म्रद = ताम्र! सबोधनैकवचनम्। ६ अयम्। ताम्र + अयम् = ताम्रायम् + नख० ताम्रायन्नख०। ७ ख + मण्डल + क्यङ् + क्विप् – खमण्डला। अस्य सप्तम्याम् खमण्डलि। ० मण्डलि + ई = ० मण्डली = मण्डली। ८ प्रति + ऊ + ऊह – शर + व + भू = प्रत्यूहशलभप् + ल =प्रत्यूहशलभप्ल। पदद्वयमपि प्रथमान्तम्। ९ अ+ष+इ=अषे समासान्तर्गतं पदम्। १० दीप्रदीप + अङ्कुर + अस् = दीप्रदीपाङ्कुरा. प्रथमा। ११ यते! संबोधनम्। ]

व्याख्या–हे यते! तां संसारहेतुभूतां लक्ष्मीं 'म्रदिष् मर्दने' [१००४] इति म्रदते लक्षणया त्यजति "क्वचित्" [५।१।१७१]डे ताम्रः तस्य सं० हे ताम्र! त्वं नः अस्माकं वर्धमानं जिनम् आख्याति णिजि क्विपि तयोर्लोपे "नाम्नो नो०"[२।१।९१] इति नो लोपे वर्धमा–श्रीवीरस्य वक्ता–स्तात्। त्वं किं० अयं प्रत्यक्षलक्ष्यः। पुनः किं० प्रतिकूला या–हिंसार्थादवेर्भावे क्विपि–ऊर्हिंसा तस्या यः ऊहो विमर्शः स एव र-लयोरैक्यात् शरं जलं तस्मिन्। "वः प्रचेतसि कलशे" [ ] इत्येकाक्षरवचनाद् बः कलशस्तस्माद् भवति क्विपि बभूः अगस्तिस्तम् आख्याति णिजि क्विपि तल्लोपे सौ "दीर्घङ्याब्०" [१।४।४५] इति तस्या अपि लोपे चतुर्थान्तत्वाद् "ग-ड-द-बादेः०" [२।१।७७] इति बस्य भत्वेऽग्रेतनस्य भस्य "धुटस्तृतीयः" [२।१।७६] इति बत्वे विरामविवक्षया पत्वे प्रत्यूहशलभप् अत्र अग्रेतनलेन सहैकीभावाद् विरामाभावेऽपि–

"संहितैकपदेनित्या, नित्या धातूपसर्गयोः।
नित्या समासे, वाक्ये तु सा विवक्षामुपेक्ष्य (मपेक्ष)ते ॥"

इति वचनाद् वाक्ये विवक्षया विरामो भवतीत्युपन्यस्तम्। पुनः किं० "षः श्रेष्ठे" इत्येकाक्षरान्नञा योगे अष. अश्रेष्ठो य इः कामः स एव "अग्नौ दीप्रः" [हैमकोषनाममाला श्लो० १७११] इति शेषवचनाद् दीप्रः अग्निस्तस्य दीप्यते इति घञि दीपो दीपनं तस्मिन्। "अङ्कुरं सलिले रोम्णि, रुधिरेऽभिनवोद्गमे"। [हैम० अनेका० स० त्रिस्वरकां० श्लो० १११८] इत्यनेकार्थवचनात् अङ्कुरं जलं तद्वदससि शोभसे क्विपि अषेदीप्रदीपाङ्कुराः। पुनः किं० "ल इन्द्रे चलनेऽपि च" [ ]इति वचनात् ल इव लः इन्द्रसदृश इत्यर्थः। कस्मिन्? 'षिधू शास्त्र-माङ्गल्ययोः'[ ३२१] इत्यतो नपुंसके क्ते सिद्धं

१ "अग्नौ वमिर्दीप्रः समतभुक्"–हैमशेषनाममाला।

शास्त्रं तद् यान्ति श्रयन्ति "आतो ड॰"[५।१।७६] इति डे सिद्धयो विद्वान्–जात्येक-वचनं–तस्मिन् सिद्धये । किम्भूते ? उत्तमत्वान्नखैः कृत्वा मण्डलं चन्द्रस्य सूर्यस्य वा विम्वम् तद्वदाचरति क्यङि दीर्घे क्विपि यलोपे सप्तम्यां "ङ्यातोऽनाप." [२।१।१०७] इत्यालोपे नखमण्डलि । त्वं किं॰ 'ईङ्च् गतौ' [१२५२]. "गत्यर्था ज्ञानार्था" [हैमहंस॰ न्यायसं॰ पृ॰ ९३ न्याय ४४]इति ईयसे जानासि तत्त्वातत्त्वमिति ईः क्विपि तत्त्वज्ञः ॥५७॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥५८॥
[[1]सिद्धये [2]वर्धमानस्ताऽऽत्ताऽम्रायन्नखमण्डली ।
[4]प्रत्यूहश ! लभ[5] [6]प्लोषेदी[7] [8]प्रदीपाङ्कुरा यते[9] ! ॥५८॥]

[1 सिद्धये चतुर्थ्यन्तम् । २ वर्धमान+स्तन्+आत्त+अम्लायन्=वर्धमानस्ताऽत्ताऽम्रायन् । ३ अ+ख+मण्डली+ङे=अखमण्डली । ॰त्ताम्रायन्+अखमण्डली =॰त्ताऽम्रायन्नखमण्डली । ४ प्रति+ऊ+ऊह+शो=प्रत्यूहश अस्य संबोधने प्रत्यूहश ! ५ लभ द्वितीयपुरुषैकवचने क्रियापदम् पञ्चम्याम् ६ प्लोष-'लभ'वत् क्रियापदम् । ७ ङ+इन्ध्–ईन्+ई=ईदि । अस्य इकारान्तस्य द्विवचनम्–ईदी । ८ प्रदीप+अङ्कुर+अस्=प्रदीपाङ्कुरा प्रथमैकवचनम् । ९ यत+ई=यते–एकारान्तं पदम्–संबोधनैकवचनम् ।]

व्याख्या–'यम् उपरमे' [३८६] "क्लीबे क्तः" [५।३।१२३] इति क्ते यतं व्रतम् । ईयते गच्छति क्विपि यते तस्य सं॰ हे यते ! साधो ! "अदेतः स्यमोर्लुक्" [१।४।४४] इति सिद्धम् । 'अव रक्षण॰' [४८९] इति हिंसार्थात् "म्यादिभ्यो वा" [५।३।११५] इति क्विपि ऊटि ऊर्हिंसा तां प्रति लक्षीकृत्य, प्रत्यू –हिंसाविषयः–यः ऊहः तर्कस्तं श्यति तनूकरोति "आतो डोऽह्वा-वा॰" [५।१।७६] इति डे प्रत्यूहशस्तस्य सं॰ हे प्रत्यूहश ! त्वं सिद्धये मोक्षाय आत्मनेपदस्यानित्यत्वात् पञ्चम्या हौ लभ प्राप्नुहि । अत्र सिद्धेः कर्मत्वेऽपि सम्प्रदानविवक्षया चतुर्थी तथा चकाराध्याहारात् च पुनः कि॰ इः कामस्तेन इन्धे दीप्यते क्विपि ईत् कामिजनस्तथा इ कामस्तयोरितरेतरद्वन्द्वे ईदी कामि-कामौ प्लोष दहेत्यर्थः । साधुर्हि सेवकानां ब्रह्मचर्योच्चारणेन कामिजनाभावं करोति, तेषामभावे कामस्याप्यभाव इति । त्वं कि॰ प्रदीपाङ्कुर इवाचरति क्यङि क्विपि तल्लोपे अल्लोपे सौ प्रदीपाङ्कुरा प्रदीपसदृश इत्यर्थः । प्रथमे पादे म स-ज-भ-ग-गा, द्वितीये स न-ज-र-गा, तृतीये न न-स-न-साः, चतुर्थे न-न-न ज-याः. वर्धमानं छन्द इति वर्धमानं छन्दोविशेषः उपचारात् छन्दोऽनुशासनग्रन्थः अन्यान्यपि शास्त्राणि । 'स्तन शब्दे' [३२३] स्तनन्ति पठन्ति क्विपि "अहन्-पञ्चम॰"

[४।१।१०७] इति दीर्घे वर्धमानस्तानः—शिष्याः—तैरात्तः—अङ्गीकृतः परिवृतः सन् न म्लायसि न म्लानीभवसि शतरि वर्धमानस्तात्ताम्लायन्—र-लयोरैक्यात्—सिद्धम्। पुनः किं० न विद्यते खानि इन्द्रियाणि प्रयोज्यतया यस्य स अखः। तथा मण्डल्यः सप्तसङ्ख्याका यतीनां प्रसिद्धास्ता ईयते गच्छति क्विपि मण्डलीः पश्चाद् विशेषणसमासे अखमण्डलीः॥५८॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥५९॥
[सि[1]द्धयेव [2]र्धमाः ! [3]नस्ताऽऽ[4]त्ताऽऽम्रा ! [5]यन्न खमण्डली ।
[6]प्रत्यूहशल् ! [7]अभप्लोषे दी[8]प्रदीपां [9]कुरा ! यते[10] ! ॥५९॥]

[१ सिद्धयेव इति 'सिद्धि' शब्दस्य नामधातुत्वे क्रियापदम्—परस्मैपदे—सप्तम्या अस्मत्पुरुषस्य द्विवचनम्। २ ऋद्धमा. । संबोधनम्। ३ नः षष्ठी। सिद्धयेव+ऋद्धमा'+न =सिद्धये वर्धमान' । ४ ता+आत्त+आम्र+अस्=तात्ताम्रा । सबोधनम्। ५ ई+अन्न-खमण्डली=यन्नखमण्डली। बहुव्रीहि-समासे '*मण्डलि' इति। तस्य द्विवचनम् °मण्डली। ६ प्रति+ऊह+शल्=प्रत्यूहशल् । संबोधनम्। ७ अ+भ+प्लोषे—अभप्लोषे सप्तम्या एकवचनम्। ८ दीप्रदीपाम् षष्ठीबहुवचनम्। ९ कुल+अस् =कुलास्—कुला. । संबोधनम् । तत 'कुरा' इति बोध्यम्। दीप्रदीपाम्+कुरा=दीप्रदीपाङ्कुरा इति । १० यते । संबोधनम् । ]

व्याख्या—कश्चित् साधुः कंचित् साधुं प्रति वैराग्यं भावयन्नाह—हे यते ! साधो !। हे ऋद्धमाः ! ऋद्धा ज्ञानादिलक्ष्मीसमृद्धास्तेषु माः चन्द्र इव ऋद्धमास्तस्य सं०। तया लक्ष्म्या आत्ता अङ्गीकृताः तात्ताः इभ्यास्तेषु विषये आम्रवत् सहकारवत् असति शोभसे क्विपि तात्ताम्राः—तेषाम् आम्रवत् सन्तापहर इत्यर्थः—तस्य सं० हे तात्ताम्राः !। तथा ऊहं वितर्कम्। 'शट रुजा-विशरण-गत्यवसादनेषु' [१७५] इत्यतो "गत्यर्था ज्ञानार्थाः" [हेमहंस० न्यायसं० पृ० ९३ न्याय ४४]इति शटति जानाति क्विपि ऊहशड्—ड लयोरैक्याल्लत्वे—ऊहशल् तस्य सं०हे ऊहशल् ! विचारज्ञ ! तथा र-लयोरैक्यात् कुलेन वंशेन असति शोभसे कुलास्तस्य सं० हे कुलाः ! कुलीन ! आवां न आत्मनामेव सिद्धयेव सम्यक्क्रियानुष्ठानेन सिद्धिं मोक्षं कुर्याव इति क्रियासम्बन्धः। अत्र सिद्धिशब्दात् णिजि सप्तम्या अस्मदर्थद्विवचने 'सिद्धयेव'इति सिद्धम्। 'नः' इत्यत्र बहुवचनं पूज्यत्वान्निर्दूषणम् । नः किं० अः कृष्णस्तस्माद भवति "क्वचित्" [५।१।१७१] डे अभः कामस्तस्य प्लोषे दाहे दीप्रवद् वह्निवद् दीप्यामहे—"क्विप्" [५।१।१४८] इति क्विपि अभप्लोषे—दीप्रदीपस्तेषाम्। यथा वह्निः सर्वं दहति, तथा वयमपि काममिति। तथा आवां कथम्भूतौ ? यन्नखमण्डली ई पृथिवी, तत्स्थलोका अपि ई, तस्या अन्नमिव अन्नं जीवनम् खमण्डली ज्ञानश्रेणिर्ययोस्तौ अन्नखमण्डली अत्र अनित्यत्वात् कजभावे "गोश्चान्ते ह्रस्वः०" [२।४।९६] इति ह्रस्वत्वे प्रथमाद्विवचने मण्डली इति रूपसिद्धिः ॥५९॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्तदीपाङ्कुरायते ॥६०॥
[ सिद्धयेर्वर्ध ! मानस्तात् ताँ म्रायन्न ! खमण्डलीः।
प्रत्यूहशल्ल ! अभप्लोषेदी ! प्रदीपाङ्कुरा यते" ॥६०॥]

[१ सिन् ! सबोधनम् । २ 'हयेव' सप्तम्या अस्मत्पुरुषस्य द्विवचनम् । ३ ऋद्ध ! संबोधनम् । ४ मा+न+अस्+ता–बहुव्रीहौ ह्रस्वत्वे–०त=मानस्तात्–पञ्चम्या एकवचनम् । ५ ता· द्वितीयाबहुवचनम् । ६ म्लायद्+न+म्लायन्न=म्रायन्न ! सबोधनम् । ७ खमण्डली·– द्वितीयाबहुवचनम्–खमण्डली–'हयेव' इत्यस्य कर्म । ८ प्रति+ऊ+ह+शल्क्=प्रत्यूहशल् ! संबोधनम् । ९ अ+भा=अभ+प्लोष+इ+दी –अभप्लोषेदी ! सबोधनम् । १० प्रदीपाङ्कुरा द्वितीया-बहुवचनम् 'खमण्डली' इत्यस्य विशेषणम् । ११ यते षष्ठ्या एकवचनम् ]

व्याख्या–कश्चित् साधुः कंचित् साधुं प्रति कथयन्नस्ति । 'षिधू गत्याम्' [ ३२० ] सेधसि जानासि तत्त्वातत्त्वमिति सित् तस्य सं० हे सित् ! । म्लायति शतरि म्लायन् "नः पुनर्बन्ध-बुद्धयोः" [ ] इत्येकाक्षरवचनात् नो बन्धो यस्मात् स म्लायन्नस्तस्य सं० हे म्लायन्न ! । तथा प्रतिपूर्वाद् 'अव रक्षण०' [ ४८९ ] इति दहनार्थाद् अवेः कर्तरि क्विपि ऊटि प्रत्यूर्दाहको "हो हस्ते शूलिनि" [ ] इत्येकाक्षरवचनात् हो रुद्रो यस्य स प्रत्यूहः कामस्तं शल्कयति खण्डयति क्विपि सौ "पदस्य" [२।१।८९] इति कलोपे हे प्रत्यूहशल्ल ! हे ऋद्ध ! संयमश्रियेति शेषः । तथा अः कृष्णस्तस्मिन् भाति "क्वचित्" [ ५।१।१७१ ] डे अभः कृष्णविषयः–'प्लुषश्च् स्नेहन०' [ १५६२ ] इति धातोर्घञि–प्लोषः स्नेहो यस्य निजपितृत्वात् स अभप्लोषः स स चासौ इश्च कामश्च अभप्लोषेः तम्–'दीङ्च् क्षये' [ १२४४ ] इति दीयसे क्षयं नयसि क्विपि हे अभप्लोषेदी· ! हे साधो ! आवां यते· स्वगुरोः सकाशात् खमण्डलीर्ज्ञानमण्डली· हयेव जानीयावेत्यर्थ· । अत्र 'हय हर्य क्लान्तौ च' [ ३९७ ] इति चानुकृष्टगत्यर्थात् तस्य ज्ञानार्थत्वात् हयधातो· सप्तम्यस्मदर्थद्विवचने रूपसिद्धिः । किम्भूता खमण्डलीः [१] ता· प्रसिद्धा· । पुनः किं० आन्तरतमःक्षयकारित्वात् प्रदीपाङ्कुरा इव प्रदीपाङ्कुराः प्रदीपसदृशा इत्यर्थः । यते· किं० न 'असी गत्यादानयोश्च' [ ९३२ ] इति असति आदत्ते क्विपि अनः भावे तलि अनस्ता–अग्रहणम्, मानां धन-धान्यलक्ष्मीणां अनस्ता अग्रहणं यस्य स तस्मात् मानस्तात् ॥६०॥

---

१ असति इति अ, न अ अन इत्येव बोध्यम् ।

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥६१॥
[सिद्धये वर्धमानः स्तात् तॉ म्रायॅन्नॅ खमॅण्डली ।
प्रत्यूहशलभप्लोषेऽदीप्रदीपांऽकुरा यते ॥६१॥ ]

[ १ सित+हय+इन्व्-सिद्ध प्रथमायाये एकवचनम् । २ वर्धमान प्रथमा । ३ क्रियापदम् । ४ तु+विच्=तो । तत द्वितीयाबहुवचनम् ता'-ता । ५ म्लायन्-म्रायन् प्रथमान्तम् । ६ न निषेधवाची । ७ खमण्डली प्रथमान्तम् । ८ प्रत्यूह+शल+भ+प्लोष+अ+द+क्यङ् (०अदी+इ=अदी) प्र+दो (प्रदी)+पन्=प्रत्यूहशलभप्लोषेऽदीप्रदीपा-प्रथमान्तम् । ९ अ+कु+आ=अकुरा । अत्र कु प्रथमा तत. 'आ' पदम् निपातरूपम् । १०यते ।]

व्याख्या—'आ' इति स्मरणे । यतेः साधोः । 'पा'शब्दस्थानुस्वारवाच्यं परब्रह्म तत्सदृशः । "कुस्तु भूमौ शब्दे च" [ ] इत्येकाक्षरवचनात् कुः शब्दो वचनमिति यावत् । 'तुंक् वृत्ति-हिंसा-पूरणेषु' [ १०७९ ] इति हिंसार्थ'तु'धातोः तुवन्ति हिंसन्ति जन्तूनिति विचि गुणे द्वितीयाशसि "आ अम्-शसोऽता" [ १।४।७५ ] इति आकारे ता हिंसकान् । 'वर्धन(ण्) छेदन-पूरणयोः' [ १६६१ ] इति छेदनार्थाद् 'वर्ध' धातोः अनित्यत्वात् णिचोऽभावे वर्धति छिनत्ति इत्येवंशीलः "वयःशक्तिशीले" [ ५।२।२४ ] इति 'शान'प्रत्यये वर्धमानः छिन्दानः स्तात्—भवतु—इति क्रियासम्बन्धः । ननु साधोः सर्वसावद्यविरतत्वाद वचनं कथं हिंसकजन्तून् प्रति छेदकं वर्ण्यते तद्वचनस्य सर्वजन्तुषु हितावहत्वात् ? उच्यते, तेषां हिंसापरिणामच्छेदकत्वेन परिणामिनोऽपि कथंचिच्छेदनादेवंवर्णनम् । हिंसापरिणामच्छेदने च दुर्गतिपातत्राणात् साधुवचनं तेषां हितमेव । किं० साधुशब्दः ? 'षिग्‌ट्र् बन्धने' [ १२८७ ] क्विपि सित् सम्बद्धीभवन् यः 'हिंट्र् गति-वृद्ध्योः' [ १२९५ ] इत्यतो "युवर्ण-वृ-द-वश-रण०" [ ५।३।२० ] इत्यलि हयः—ज्ञानम् गत्यर्थानां ज्ञानार्थत्वात्—तं 'इवु व्याप्तौ च' [ ४८८ ] इत्यतो इन्वति व्याप्नोति विचि "य्वोः प्वय्०" [ ४।४।१२१ ] इति वलोपे सौ "नाम्नो नोऽनह्नः" [ २।१।९१ ] इति नलोपे सिद्धये ज्ञानव्यापक इत्यर्थः । अत एव किं० न म्लायन् वाग्दूषणैरम्लान इत्यर्थः । अत एव किं ? खमण्डलं सूर्यबिम्बं तद्वद् अवश्यमाचरति क्विपि धातुत्वे "णिन् चाऽऽवश्यकाधमर्ण्ये" [५।४।३६] इति णिनि खमण्डली । कस्मिन् ? प्रत्यूहा विघ्नाः त एव 'शल चलने' [ ९८४ ] शलन्ति व्याप्नुवन्ति "वा ज्वलादि०" [ ५।१।६२ ] इत्यस्य विकल्पे अचि शलानि जगद्व्यापकानि यानि भानि-नक्षत्राणि तेषां प्लोषे-दाहे । पुनः कि० अः कृष्णस्तस्य दं कलत्रं लक्ष्मी' तां स्वमातृत्वात् इच्छतीति क्यङि क्विपि अदीयः इ' कामस्तं

१ 'प्रदीपाकुर' इत्यत्र 'प्रदीपा'पदसम्बन्धि'पा'शब्दस्थम् 'ं' इति ।

प्रद्यति छिनत्ति क्विपि परमते " ईऽर्व्यञ्जनेऽयपि" [ ४।३।९७ ] इति ईकारे अदीप्रदीर्जिनः तं 'पनि स्तुतौ' [ ७४८ ] इति पनायति स्तौति क्विपि "अशवि ते वा" [ ३।४।४ ] इति 'आय' प्रत्ययाभावे "अहन्-पञ्चमस्य०" [ ४।१।१०७ ] इति दीर्घे सौ "नाम्नो नोऽनह्नः" [२।१।९१ ] इति नलोपे अदीप्रदीपा अनुस्वराभावश्चित्रत्वान्न दोषाय ॥६१॥

सिद्धये वर्धमानः स्यात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥६२॥
[ सिद्धये[2] वर्धमानस्तात्[4] ! ता[5] म्रा[6] ! यन्न[7] खमण्डली[8] ।
प्रत्यूहशलभप्लोषे[9] दीप्रदीपा[10] ङ्कुरा यते[11] ॥६२॥ ]

[ १ सित् ! संबोधनम् । २ हयेव क्रियापदम्-सप्तम्या अस्मत्पुरुषस्य द्विवचनम् । ३ ऋद्ध+अहम्=ऋद्धमान् द्वितीयाबहुवचनम् 'ता' इत्यस्य विशेषणम् । ४ अस्त+अत्=अस्तात् ! संबोधनम् । सित्+हयेव+ऋद्धमान्+अस्तात्=सिद्धयेवर्धमानस्तात् । ५ ता॰ द्वितीयाबहुवचनम् । ६ म्ला = म्रा संबोधनम् । ७ यत्+न=यन्न ! संबोधनम् । ८ ल=लि । ख+मण्ड+लि-खमण्डली-प्रथमाद्विवचनम् । 'हयेव' इत्यस्य क्रियापदस्य कर्तृविशेषणम् । ९ प्रत्यूहशलभप्लोषे सप्तम्या एकवचनम् । १० दीप्रदीपाङ्कुरा 'ता' इत्यस्य विशेषणम् । ११ यते -पञ्चम्या एकवचनम्-यते। ]

व्याख्या-कश्चित् साधुर्वैराग्यतः स्वमात्मानं प्रति कथयन्नस्ति-तद्यथा-अस्तं पश्चिमाद्रिम् 'अत सातत्यगमने' [२७९] अतति क्विपि अस्तात् सूर्यः स इव तस्य सं० हे अस्तात् ! सूर्यसदृश!। म्लायति कर्मभिरिति म्लास्तस्य सं० हे म्लाः ! तथा यन् गच्छन् "नः पुनर्बन्ध-बुद्धयोः" [ ] इत्येकाक्षरवचनात् नः कर्मबन्धो यस्मात् यन्नः तस्य स० हे यन्न ! असाधारणविशेषणैरात्मा लभ्यते । आत्मा खलु केवलः सूर्यवद् दीप्र एव भाति, कर्मविलिप्तः सन् म्लानोऽपि सामग्रीविशेषेऽपगतकर्मा भवति इति विशेषणत्रयम् । तथा सिद्धिं सकलकर्मापगमोद्भूतां मुक्तिं करोति णिजि क्विपि सित् तस्य सं० हे सित् ! सिद्धिगामिन् ! आवाम् 'यमू उपरमे' [३८६] स्त्रियां क्तौ यतिर्व्रतम् तस्याः सकाशात् ताः स्वर्गापवर्गादिलक्ष्मीः हयेव गच्छेव । अत्र 'हय हर्य क्लान्तौ च' [३९७] इति चानुकृष्टगत्यर्थात् हयतेः सप्तम्यां सिद्धम् । आवां किं० खं स्वर्गस्तस्य मण्डो भूषणं तस्मिन्, "ल इन्द्रे चलनेऽपि" [ ]इत्येकाक्षरवचनात् ल इन्द्रस्तस्यापत्ये ली "अत इञ्"[६ । १ । ३१] इति इञि द्विवचने ली यथा ली इन्द्रसुतौ स्वर्गं भूषयतः, तथा आवामपीत्यर्थः । अत्र साधोस्तदात्मनश्चैक्येऽपि 'तैलस्य धारा' 'सर्प आत्मानम्-आत्मना आत्मानम्-वेष्टयति' इतिवत्

पार्थक्यविवक्षा । ता लक्ष्मीः किं० ऋद्धः समृद्धोऽहं याभ्यः सकाशात् ताः ऋद्ध-मान् अत्र समासान्तर्गतास्मच्छब्दस्यैकवचनत्वान्मादेशः । शेषं सुगमं सूत्रादिकम् । पुनस्ताः किं० दीप्रदीपाङ्कुरा इव दीप्रदीपाङ्कुराः । कस्मिन् ? प्रत्यूहा विघ्नास्त एव शलभाः पतङ्गास्तेषां प्लोषे दाहे ॥ ६२ ॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥ ६३ ॥
[[1]सिद्धये [2]वर्धमानस्[3]तात् [4]ताम्रा [5]यन्नखमण्डली ।
[6]प्रत्यू-हशल-भप्लोऽषे[7] [8]दीप्रदीपां [9]कु[10]रा यते[11] ॥ ६३ ॥]

[१ सिद्धये चतुर्थ्यन्तमेकवचनम् । २ वर्धमान प्रथमाया एकवचनम् । ३ ता+अद= तात् प्रथमैकवचनम् । ४ ताम्र+अस्=ताम्रा प्रथमैकवचनम् । ५ यत्+न+ख–मण्ड+ली =यन्नख-मण्डली –प्रथमैकवचनम्–०मण्डली । ६ प्रती+इ+ऊ+उ–हस=प्रत्यूहस–प्रत्यूहश+प्र+अय्=प्राय्= प्लाय्=प्ला =प्रत्यूहशलभप्ला +अष+इदीप्+रदीपाम्=प्रत्यूहशलभप्लोऽषेदीप्रदीपाम् । ७ अत्र 'अष' इति पञ्चम्या द्वितीयपुरुषैकवचनम् । प्र+अय्=प्राय्=प्लाय्=तत प्ला इति जायते । प्ला +अष इत्यस्य 'प्लोऽष' इति रूपम् असंभवि 'प्ला' इत्यत्र विसर्गात् पूर्वस्मिन् भागे आकारस्य विद्य-मानत्वात् । तथापि ग्रन्थकारेण केनापि प्रकारेण 'प्लोऽष' इति साधितम् । ८ प्लोऽष+ इदीप्-रदीपाम्=० प्लोऽषे दीप्रदीपाम् । ०प्रदीपाम् षष्ठीवहुचनम् । ९ कु प्रथमा–स्थानम् । १० आ । संबोधनम् । कु :+आ=कुरा इति निष्पाद्यम् । ११ यते -पञ्चम्या एकवचनम्–यते ।]

व्याख्या–"आ विधातरि मन्मथे" [ ] इत्येकाक्षरवचनात् आ कामस्तस्य सं० हे आः ! काम ! त्वं यतेः सकाशात् 'अषी असी गत्यादानयोश्च' [९३१] इति धातोः पञ्चम्याम् अष–गच्छ–दूरं पलायस्वेत्यर्थः। त्वं किं० 'जिइन्धैप् दीप्तौ' [१४९८] इत्यतो भावे "क्रुत्सम्पदादिभ्यः" [५।३।११४] क्विपि इत् दीपनम्, तदीप्सति क्विपि "पदस्य" [२।१।८९] इति सलोपे विरामविवक्षया "धुटस्तृतीयः"[२।१।७६] इति तृतीयाभावे इदीप् । पुनः किं० "रस्तीक्ष्णे वैश्वानरे कामे"[ ]इत्येकाक्षरवचनाद् रो वह्निस्तद्वद् याः–दीपनं भावे क्विपि–दीपकान्त्यस्तासां रदीपाम् कुः स्थानम् । पुनः किं० तां लक्ष्मी घन-धान्या-दिकाम् । 'अट्टि हिंसातिक्रमयोः' [६७४] अट्टते हिनस्ति क्विपि तात् अत्र दकारोपान्त्यात् अट्टेः "पदस्य" [ २ । १ । ८९ ] इति टलोपे सिद्धम् । अत एव किं० ताम्रं धातुभेदः उपलक्षणत्वात् सुवर्णादि अस्यति क्षय नयति क्विपि ताम्राः । पुनः किं० एतीति शतरि यती गच्छन्ती नो ज्ञानम् खं सुखम् एव मण्डः शोभा तस्य लीः श्लेषो यस्मात् स यन्नखमण्डली । पुनः किं० "वर्धमानो वीरजिने स्वस्तिकैरण्ड-विष्णुषु" [ हैम० अने० चतु.स्वरकां० श्लो० १५६१] इति अनेकार्थवचनाद् वर्धमानः एरण्डः स इव । कस्यै सिद्धये कार्यनिष्पत्तये । यथा एरण्डेन कार्यसिद्धिर्न स्यात् तथा त्वया सिद्धिर्न भवतीत्यर्थः । यते. किं०

प्रकर्षेण तां लक्ष्मीम् इच्छति क्यनि क्विपि प्रतीः यः इः कामस्तस्य ऊहिंसनं तस्मिन् उं शिवं हसति अचि प्रत्यूहशः—श-सयोरैक्यात्—एवंविधो यो लेन इन्द्रेण भाति लभो जिनः तं प्रपूर्वाद् अयतेः "उपसर्गस्याऽयौ" [ २।३।१०० ] इति लत्वे प्लायति श्रयति विचि "य्वोः प्वय्०" [ ४।४।१२१ ] इति यलोपे प्रत्यूहशलभप्लाः ॥६३॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥६४॥
[ [1]सिद्धये [2]वर्धमानस्[3]ताता[4]ऽऽम्रायन् [5]न [6]खमण्डली ।
[7]प्रत्यूहशलभप्लोषे [8]दीप्र [9]दीपाङ्कुरा [10]यते ॥६४॥ ]

[ १ सिद्ध प्रथमान्तम् । २ ए+व+ऋ+ध+म=एवर्धम, ततः द्वितीयाबहुवचनम् । सिद्ध+एवर्धमान्+सिद्धये वर्धमान् । ३ अस्त+अत्ता=अस्तात्त । ४ आ+म्लायत्=आम्रायत् । अस्तात्त+आम्रायत्=अस्तात्ताम्रायत्+न+खमण्डली=अस्तात्ताम्रायन्नखमण्डली । सिद्धयेवर्धमान्+अस्तात्ता० सिद्धये वर्धमानस्तात्ताम्रायन्नखमण्डली । ५ न निषेधवाची । ६ ख+मण्डली+ईर्=खमण्डली =खमण्डली । ७ प्रति+ई+ऊह+शलभ+प्लोषे=प्रत्यूहशलमप्लोषे सप्तम्यन्तम् । ८ दीप्र–पञ्चम्या 'हि' प्रत्यये नामधातुजम् रूपम् 'त्वम्' इतिकर्तृकम् । ९ दीप+अङ्कुर+अस्=दीपाङ्कुरास्=दीपाङ्कुरा । १० यते ! संबोधनम् । ]

व्याख्या– हे यते ! साधो ! त्वं प्रतिकूला या ई लक्ष्मीः स्वर्ण-रूप्यादिका तस्याम् ऊहः—ग्रहणाभिप्रायः—स एव शलभः—पतङ्गः—तस्य प्लोषे दाहे दीपः—अग्निः—इव आचर—इत्यर्थः । साधनिका तु पूर्ववद् ज्ञेया । त्वं किं० दीप्यते इति "नाम्युपान्त्य०" [ ५।१।५४ ] इति के दीपं दीप्यमानं प्रदीपसदृशं वा यत् "अङ्कुरं सलिले रोम्णि रुधिरे" [ हैम० अने० सं० त्रिस्वरकां० ११९८ ] इति अनेकार्थवचनाद् अङ्कुरं रुधिरं निजशरीरोद्भवं तत् तपसाम् [ तपसा ] अस्यसि क्षिपसि क्विपि दीपाङ्कुराः । मुनीनाम् अस्थि-चर्मावशेष एव शरीरशोभावहः । पुनः किं० 'षिधू गत्याम्' [३२०] क्ते सिद्धो गतः श्रित इत्यर्थः । कान् ? एवर्धमान् "भवेत् एर्विष्णुः" [ ] इत्येकाक्षरात् एर्विष्णुः वो महेश्वरः, तथा ऋर्देवमाता तां 'ट्धे पाने' [२८] इति धयति "आतो डः०" [५।१।७६] इति डे ऋधो देवः "मो विधौ" [ ] इति वचनात् मो विधिस्तेषां द्वन्द्वे एवर्धमा., द्वितीयाशसि एवर्धमान् । कथम् ? न इति निषेधे ब्रह्म-विष्णु-शिवान् देवान् अनाश्रित—इत्यर्थः—तेषां मिथ्योपदेशित्वात् । त्वं किं० अस्ता क्षिप्ता परित्यक्ता इति यावत् । अत्ता माता उपलक्षणत्वात् सांसारिककुटुम्बं येन स अस्तात्तः तथा आ कामः तस्य 'म्लै'धातो. "इकिश्तिव् स्वरूपार्थे" [५।३।१३८] इति तिवि म्लायतिर्मालिन्यम् तं करोति णिजि क्विपि आम्ला-

यत् पश्चाद् विशेषणसमासे, अस्तात्ताम्लायन् । पुनः किं० खानि इन्द्रियाणि, तेषां मण्डलीं श्रेणीम् उपचारात् शब्दरूपादिविषयान् ईरयसि कम्पयसि क्विपि खमण्डली श्लेषाद् विसर्गाभावः ॥६४॥

इति वृत्तार्थाष्टकेन पञ्च[म]परमेष्ठिनं व्यावर्ण्य, तस्यैव भेदं पण्डितम् वाचनाचार्यम् वर्णयति—तथाहि—

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥६५॥**
**[ सिद्धये वर्धमानः स्तात् ताम्रायन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषेदीप्रदीपाङ्कुरा यते ॥६५॥]**

[ १ सिद्धयेवर्धमान' प्रथमाया एकवचनम् । सिद्ध+या+ई='सिद्धये' अस्य पदस्य वर्धमानविद्यावाचकेन 'वर्धमान'पदेन समासे सिद्धयेवर्धमान । २ 'स्तात्' क्रियापदम् । ३ ताम्र+अस्=ताम्राऽस्=ताम्रा । ताम्रा +अन्न०=ताम्रायन्न० । ४ अन्न+खाद्=अन्नख+मण्डल=अन्नखमण्डल+क्यन्+क्विप्=अन्नखमण्डली =अन्नखमण्डली । ५ प्रत्यूह+सह्=प्रत्यूहशल+अभ+प्लोष+ई=प्रत्यूहशलभप्लोषे इति एकारान्तम् प्रथमाया एकवचनम् । ६ दीप्र+दीप+अङ्कुर+अस्=दीप्रदीपाङ्कुरा 'प्रत्यूहशलभप्लोषे' पदेन अस्य पदस्य समासे प्रत्यूहशलभप्लोषेदीप्रदीपाङ्कुरा' । ७ इ+अ+तेव्+विच्=यते । एतदपि एकारान्तं प्रथमान्तम् एकवचनम् । तत अत्र 'यते' इति सिद्धम् । ]

व्याख्या—सिद्धां सम्पन्नाम्[याम्—] प्रभावलक्ष्मीम्—ईयते—गच्छति—क्विपि येः सप्रभावा "ते लुग् वा" [३।२।१०८] इति उत्तरपदलोपाद् वर्धमानविद्या यस्य स सिद्धयेवर्धमानो वाचनाचार्यः । इः कामस्तेन हेतुभूतेन, न तेवते न क्रीडति इति विचि यतेः । अत्र "य्वोः प्वय्०" [४।४।१२१] इति यलोपः । क्विपि तु वस्योट् स्यात् इति विचि सिद्धम् । यतेः कामेन विषयसुखेन हेतुभूतेन अक्रीडकः स्तात्—भवतु—इति क्रियाशेषः । किम्भूतः ? ताम्रं धातुभेदः उपलक्षणाद् सुवर्णादि, निरीहत्वाद् अस्यति क्षिपति त्यजतीति यावत् क्विपि ताम्राः । पुनः किं० अन्नं धान्यं खादन्ति "क्वचित्" [५।१।१७१] डे अन्नखानि धान्यभक्षकाणि न तु

१ अत्र ग्रन्थकार एकारान्त 'सिद्धये' पदं निष्पादयितुं प्रयतते । येन प्रकारेण तेन तत्पदसाधनाय युक्ति दर्शिता तेन तु 'सिद्धये' इति साधयितु न शक्यम् । ग्रन्थकारयुक्ति एवम्—"सिद्धाम् सम्पन्ना प्रभावलक्ष्मीम् ईयते गच्छति क्विपि ये" । अत्र 'सिद्ध'शब्द तथा 'ई' धातु 'क्विप्'प्रत्ययश्च उपयोग नीत । अनेन तु सिद्ध+ई='सिद्धे' इत्येव स्यात् न तु 'सिद्धये' इति । अत अत्र एव पाठ युक्त —सिद्धा सम्पन्नाम्, याम् प्रभावलक्ष्मीम् ईयते गच्छति क्विपि ये अथवा सिद्धये –तथाहि–सिद्ध+या+ई=सिद्धये अथवा केवलम् या+ई='ये' इति । तत प्रथमाविभक्तौ सिद्धये इति सुसाधम् अथवा 'ये' इत्यपि । "या याने यातरि श्रियाम्" [ ३६ ] इति सुधाकलशीये एकाक्षरकोशे 'या' शब्द श्रीवाचक । अत अत्र 'या' शब्दस्य योजने न किमपि दूषणम् ।

मांसादिकस्य, यानि मण्डलानि देशाः, तान् इच्छति इति वाक्ये क्यनि क्विपि अन्नखमण्डलीः, साधूनां त एव देशा द्रष्टव्याः येषु धान्यमेव खाद्यते इति । प्रत्यूहा विघ्नास्तत्कारिणः परीषहा अप्युपचारात् प्रत्यूहाः—तान् श-सयोरैक्यात्—सहते क्विपि "हो धुट्-पदान्ते" [ २।१।८२ ] इति ढत्वे, "धुटस्तृतीयः" [ २।१।७६ ] इति डत्वे—ड-ळयोरैक्याल्लत्वे—प्रत्यूहशल् । पुनः किं० न विद्यते भा प्रभावो यस्य स अभो निष्प्रभावः प्लोषो दहनं पीडनं यस्य स अभप्लोषः, ईदृशः इः कामो यस्मात् स अभप्लोषेः । तथा दीप्रो दीप्यमानो दीपाङ्कुरः प्रदीपः तद्वद् असति शोभते क्विपि दीप्रदीपाङ्कुराः । पश्चाद् द्वयोर्विशेषणसमासे अभप्लोषेदीप्रदीपाङ्कुराः ॥६५॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥६६॥
[ [1]सिद्धये वर्धमा[2] नः[3] स्तात्[4] ताम्रा[5] यन्नखमण्डली[6] ।
[7]प्रत्यूहशलऽभप्लोषेदीप्रदीपाङ्कुरायते[8] ॥६६॥ ]

[ १ सिद्धये चतुर्थ्यन्तम् २ वर्धमा प्रथमान्तम् एकवचनम् । वर्धमान+णिच्+क्विप्=वर्धमान्=वर्धमा । ३ न. षष्ठी । ४ स्तात् क्रियापदम् । ५ ताम्र+क्यङ्=ताम्राय+क्विप्=ताम्रा । अस्य आकारान्तस्य तृतीयैकवचने ताम्रा । यथा 'गोपा'शब्दस्य तृतीयैकवचने गोपा तथा ताम्रा । ६ इ+शतृ=यत्+नख+मण्डल+णिच्+क्विप्=यन्नखमण्डल् । इ+क्यङ्+क्विप्=ई. । यन्नखमण्डल् +ई =यन्नखमण्डली =यन्नखमण्डली । ७ प्रतिशब्द लिखितप्रतिसूचक । प्रति+ऊह–शलभ्=प्रत्यूहशल् प्रथमान्तम् । ८ अ+भा=अभ=प्लोष्=अभप्लोष् । अस्य तृतीयैकवचने अभप्लोषा । 'ताम्रा' इत्यस्य विशेषणम् । ९ इन्ध्–क्विप्=इत्+ई+प्रा=इदीप्र+दीप्=इदीप्रदीपा । इदमपि तृतीयान्तमेकवचनम् । 'ताम्रा' इत्यस्य विशेषणम् । अभप्लोषा+इदीप्रदीपा=अभप्लोषेदीप्रदीपा । प्रत्यूहशल्+अभप्लोषेदीप्रदीपा=प्रत्यूहशलभप्लोषेदीप्रदीपा । १० अङ्कुर+अस्=अङ्कुरा. । अत्र 'अङ्कुराः' इति 'इ' इत्यस्य विशेषणम् । इ+अ+ताय्=यता इति आकारान्तम् तस्य चतुर्थ्यां एकवचने यते । तत. अङ्कुरा +यते=अङ्कुरायते इति एकं पदम् । ]

व्याख्या—वर्धमानां वर्धमानविद्याम् आख्याति लक्षणया स्मरति णिजि क्विपि तयोर्लोपे सौ "नाम्नो नो०" [ २।२।९१ ] इति नलोपे वर्धमा वाचनाचार्यः नः अस्माकं सिद्धये कार्यनिष्पत्तये स्तात्—भवतु—इति क्रियासंटङ्कः । किं० 'इणक् गतौ' [ १०७५ ] शतरि यन् गच्छन् दूरीभवन्निति यावत् । नखाः नखैः कृता व्रणाः स्त्रीणां वक्षःस्थलादौ, तेषां मण्डलं करोति णिजि क्विपि तल्लोपे नखमण्डल् कामिजनो यस्मात् स यन्नखमण्डल् । पुनः किं० इः कामः स इवाचरतीति क्यङि "दीर्घश्च्वि०" [ ४।३।१०८ ] इति दीर्घे क्विपि

तल्लोपे "य्वोः प्वय्०" [ ४।४।१२१ ] इति यलोपे ईः कामवदाचरन् । कया [2] 'ञिइंधैप् दीप्तौ' [ १४९८ ] क्विपि इत् दीप्ता, या ई लक्ष्मीः शोभा तां प्राति पूरयति "आतो डः०" [ ५।१।७६ ] इति डे इदीप्रा या दीप्रकान्तिः, तया रूपश्रिया कामसदृश इत्यर्थः । दीपा किं० ताम्रो रक्तवर्णः स इवाचरतीति क्यङि क्विपि तल्लोपे तृतीयाटावचने "लुगातोऽनापः" [ २।१।१०७ ] इति आलोपे ताम्रा रक्तया इत्यर्थः । पुनः किं० अः कृष्णस्तेनाप्तभूतेन भान्ति डे अभाः मैथ्यात्विकाः, तान् प्लोषति दहति निष्प्रभावीकरोतीति यावत् विचि "लघोरुपा"० [ ४।३।४ ] इति गुणे अभप्लोट् तया अभप्लोषा । सिद्धये किं० अङ्कुरं रुधिरम् अस्यति क्षिपति अर्थात् कामिनामिति क्विपि अङ्कुराः । ईदृशो य इः कामस्तं न तायते न पालयति क्विपि तल्लोपे चतुर्थ्याम् "लुगातोऽनापः" [ २।१।१०७ ] इति अलोपे अङ्कुरायते । वर्धमा किं० प्रतयो लिखिताः सिद्धान्तादि यत्र संचयात्, उपचारात् तत्र लिखितं सिद्धान्ताद्यपि, यस्मिन् ऊहो विचारः पठनादिविषये तं 'शल्भि कत्थने' [ ७७२ ] इति शल्भते श्लाघते क्विपि सौ "पदस्य" [ २।१।८९ ] इति भलोपे प्रत्यूहशल्ब ॥६६॥

इत्यर्थद्वयेन पण्डितं व्यावर्ण्य कविः स्वगुरुमेव वर्णयति—तथाहि—

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥६७॥**
**[ [1]सिद्धये[2]वर्धमानः [3]स्तात् [4]ताम्रा [5]यन्नखमण्डलीः ।**
**[6]प्रत्यूहशलभप्लोषे [7]दीप्रदीपाऽङ् [8]कुरा [9]यते ! ॥६७॥ ]**

[ १ सिद्ध प्रथमान्तम् । २ एवर्धमान इ+वन्=एव+ऋद्ध+मान=एवर्धमान प्रथमान्तम् एकवचनम् । सिद्ध +एवर्धमान =सिद्धयेवर्धमान । ३ स्तात् क्रियापदम् । ४ ताम्रा "यन्नखमण्डली" इत्यस्य विशेषणम् द्वितीयाबहुवचनम् । ५ यन्नखमण्डली सिद्ध श्रित –गुरुपादसेवक इत्यर्थं । अत्र 'मण्डली' ज्ञेयम् । ६ प्रति+ऊह+शरभ=प्रत्यूहशलभ+प्लोषे=प्रत्यूहशलभप्लोषे । ७ दीप्र+दीप्+अञ्च=दीप्रदीपाङ् । ८ रै=रा । कु+रा =कुरा । ९ यते ! सबोधनम् । ]

व्याख्या—हे यते ! गुरो ! त्वं प्रतिकूला ये ऊहा विमर्शाः त एव मतिविघातकारित्वात्— र-लयोरैक्यात्—शरभा अष्टापदाः तेषां प्लोषे क्षये कुः शब्दो गर्जितम् तेन युक्तो यो "रैः स्वर्णे जलदे घने" [ ] इत्येकाक्षरवचनात् "आ रायो व्यञ्जने" [ २।२।५ ] इति आत्वे रा जलदः स इव 'भव' इति क्रियाशेषः । किम्भूतः त्वम् जलदश्च [2] त्वत्पक्षे दीप्रो दीप्यमानो दीपनं घञि दीपः—कान्तिः—तम् अञ्चति गच्छति क्विपि "अञ्चोऽनर्चायाम्" [ ४।२।४६ ] इति नलोपे सौ "अचः"

१ 'लिखिता सिद्धान्तादि यत्र' इत्यादि वाक्यं अर्थशिथिलम् भाषयाऽपि शिथिलम् ।

आयतति निराकरोति क्विपि आम्रायत् तस्य सं० । तथा हे तात्त ! ताश्चौराः कषायादयः, तेषाम्—'अक्ङि हिंसातिक्रमयो.' [ ६७४ ] इत्यतो हिंसार्थात्, क्विपि अत्, भावे तलि—अत्ता विनाशो यस्मात् स तात्तः तस्य स० हे तात्त ! गुरो ! अहं ते तव नखेषु—'मठ मद-निवासयोश्च' [ २१५ ] इत्यतो निवासार्थात्—मठामि निवसामि क्विपि नखमठ् नखेषु वसन् सन । 'अपी गत्यादानयोश्च' [ ९३१ ] इति दीप्त्यर्थाद् वर्तमाना एकवचने अपे दीप्ये—दीप्तो भवामि—इत्यर्थः । मइ इत्यनुस्वाराभावो न दोषाय, चित्रकाव्यत्वात् । ते किं० सिद्धान् मुक्तान याति गच्छति आश्रयतीति यावत् क्विपि सिद्धया मुक्तिः सैव या ई लक्ष्मीः, तस्या "वर्धमानो वीरजिने स्वस्तिकैरण्डविष्णुपु" [ हेम०अने०स०चतुःस्वरकां०श्लो० १५६१ ] इति अनेकार्थाद् वर्धमानः इव विष्णुरिव आचरति क्यङि क्विपि तल्लोपे सिद्धयेवर्धमानाः षष्ठ्यां "लुगातोऽनापः" [ २।१।१०७ ] इति आलोपे सिद्धयेवर्धमान. । पुन. कि० प्रकृष्टौ—तिर्गतिः स्वर्गापवर्गादिका, ऊहो बुद्धिगुणभेदः, तयोर्द्वन्द्वे —त्यूहौ यस्य स प्रत्यूहः श्लेपाद् विसर्गाभावः । तथा 'शप् हिंसायाम्' [ ५१८ ] शपन्ति घ्नन्ति जीवान् इति क्विपि "धुटस्तृतीयः" [ २।१।७६ ] इति पो डत्वे — ड-लयोरैक्यात् लत्वे—शपो हिसकास्तेषु न भान्ति "क्वचित्" [ ५।१।१७१ ] डे पलभा अहिसका दयावन्तस्तान् प्राति पूरयति लक्ष्म्यादिवृद्धिकारकत्वेन क्विपि शलभप्राः पश्चाद् विशेषणसमासे प्रत्यूहशलभप्ला· षष्ठ्यां "लुगातोऽनापः" [ २।१।१०७ ] इति आलोपे प्रत्यूहशलभप्र. र-लयोरैक्यात् । अहं किं० अली इव अली भ्रमरसदृश. पदपद्मसेवकत्वात् मम इति ॥६८॥

इति अर्धद्वयेन निजगुरून् वर्णयित्वा यतीनां देशनारूपां वाणीं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥६९॥
[ सिद्धये[1]ऽवर्धमानस्ताऽत्ताऽम्ला[4]यं न खं[5]-मंडली[6] ।
[7]प्रत्यूहशलभप्लोपेदीप्रदीपां कुंरायतेः[12] ॥६९॥ ]

[ १ सिद्ध+या-डन=सिद्धयेन+णिच्-क्विप्=सिद्धयेन्=सिद्धये प्रथमाया एकवचनम् । २ अप्+अर्व-म+अम्-अवर्धमम्-अवर्धमन्-अस्य प्रथमैकवचने-अवर्धमा-अवर्धमा ३ अस्ता+अत्ताऽम्ला अस्ताऽत्ताम्ला -प्रथमैकवचनम्-अस्ताऽत्ताऽम्रा । ४ ०म्रा +अम्=म्रायं। अत्र 'अम्' इति द्वितीयैकवचनम् । ५न-ख-म=नखमम् द्वितीयैकवचनम् । पूर्वोक्तस्य अम्' इत्यस्य 'नखमम्'इत्यस्य च 'प्रति' पदेन अन्वय । ६ डली प्रथमैकवचनम् । ७ 'प्रति' इति पूर्वान्वितम्, ऊह+शल=ऊहशल् । ८ अ+भ+प्लो+प+इत्=अभप्लोपेत्' इदं पदम् 'भा पा शब्द सूचकम् । ९ ई+प्रदीप्=ईप्रदीप् षष्ठीबहुवचने ईप्रदीपाम । ०प्लोपेत्+ईप्रदीपाम्= ०प्लोपेदीप्रदीपाम् । १० कु । ११ आ =आ। कु +आ+यते=कुरायते । १२ यते षष्ठ्या एकवचनम्-यते । ]

व्याख्या—कुः शब्दो वाचकोऽस्ति । कीदृशः ? अकारेण युक्तो यः स्वरयुक्तो यो भकारः एतावता भा इति वर्णः, तं प्लवते गच्छति श्रयतीति यावत् विचि सौ "ओत औः" [ १ । ४ । ९४ ] इति सूत्रेण औकारे अभप्लौः । ईदृशं षकारम् एति क्विपि अभप्लोषेत् एतावता 'भाषा' इति शब्दो वाणीत्यर्थोऽस्तीति । कस्य ? यतेः साधोः सयतस्य । किंवाचक ? सिद्धा शाश्वती, या लक्ष्मीः, तस्या इनः स्वामी सिद्धयेनो जिनः तम् आख्याति, श्रोतॄणाम् तदुपज्ञं सिद्धान्तं वेति णिजि क्विपि तल्लोपे सौ "दीर्घङ्याब्०" [ १ । ४ । ४५ ] इति सेर्लोपे "नाम्नो नो०" [ २ । १ ९१ ] इति नलोपे सिद्धये । पुनः किं० "क्षिति-जल-पवन-हुताशन-यजमाना-ऽऽकाश-सोम-सूर्याख्याः" [ ]इत्युक्ते आपः पानीयमूर्तिः । तथा "अर्धं दानववैरिणा, गिरिजयाऽप्यर्धं हरस्याऽऽहृतम् ।" [ ] इत्युक्ते अर्धस्य पार्वत्या गृहीतत्वाद् अधोऽर्धरूपो यो मः शिवः तम् । 'अम शब्द-भक्त्योः' [ ३९१ ] इति भजनार्थाद् अमेः अमति भजते क्विपि "मो नो म्वोश्च [ २ । १ । ६७ ] इति मो नत्वे अवर्धमान्, मैथ्यात्विकजनः तस्य 'भसी'धातोः क्विपि भावे तलि अस्ता दीप्तिः तस्याः ' अङ्हि हिंसा-ऽतिक्रमयो ' [ ६७४ ] क्विपि भावे तलि- अत्ता विनाशः तस्यां कर्तव्यायां न म्लायति क्विपि अवर्धमानस्तात्ताम्लाः । पुनः किं० 'लड जिह्वोन्मथने' [ १०६३ ] णिगि लडयति उन्मन्थयति अवश्यमिति " णिन् चावश्यकाधमर्ण्ये " [ ५ । ४ । ३६ ] इति णिनि ड-लयोर्व्यत्यये डली उन्मन्थकः । कथं ? प्रति लक्षीकृत्य । कम् ? अं कृष्णम् । तथा पुनः किम्भूतः ? न. ब्रह्मा, खः सूर्यः, मश्चन्द्र तेषां समाहारद्वन्द्वे न-ख-मं बुद्ध-रवीन्दु-प्रमुखमिथ्यादृग्देवतानां प्रभावापहारक इत्यर्थः । पुनः किं० ऊहं विचारम् ' सल गतौ ' [ ४३८ ] [ सलति ] गच्छति क्विपि ऊहशल्द श-सयोरैक्यात् । पुनः किं० ' आसिक् उपवेशने ' [ ११११ ] णिगि आसयति स्थिरीकरोति क्विपि आः स्थिरीकारकः । कासा ? ई लक्ष्मीः प्रदीपः कान्त्यस्तासाम् ॥ ६९ ॥

इति यतिवाणीम् एकार्थेन व्यावर्ण्य श्रीजिनधर्मं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥७०॥
[ सिद्धयेऽवर्धमा नैः स्तात् ताम्राऽऽयन् नखमण्डली ।
प्रत्यूहशलभ-प्लोषेदीप्रदीपाङ्कुरा यते ॥७०॥ ]

[ १ सिद्धये चतुर्थ्यन्तम् । २ अव+ऋ+ध+म+अस्-अवर्धमा प्रथमैकवचनम् एतत् पदम् 'धर्म' शब्दं सूचयति । ३ न षष्ठी । ४ स्तात् क्रियापदम् । ५ ताम्र+आ+य+क्विप्+शतृ=ताम्रायन् नामधातो प्रथमान्तम् । ६ न+खमण्डल+इन्=नखमण्डली । ७ प्र+ति=प्रति । प्रति+ऊह+शलक् +णिच्×क्विप्=प्रत्यूहशल । ८ अ+भ+प्लोष=अभप्लोष+इत्=अभप्लोषेत् । ९ ई+प्रदीप+अङ्कुर+अस=ईप्रदीपाङ्कुरा । प्रत्यूहशल+अभप्लोषेत्+ईप्रदीपाङ्कुरा =प्रत्यूहशलभप्लोषेदीप्रदीपाङ्कुरा । १० यते यते । ]

१ अधुनैव ग्रन्थकार "न ब्रह्मा" इति सूचितवान् तथापि अत्र 'न' शब्देन 'बुद्ध' अभिप्रेतः ।

व्याख्या—'अव रक्षण' [ ४८९ ] इति गत्यर्थाद् अवे. अचि अवो गच्छन् र् रकारो यस्मिन् स अवर् ईदृशं धम इति वर्णद्वयम् असति आदत्ते क्विपि अवर्धमा एतावता यतेर्जिनेन्द्रस्य धर्मो न अस्माकं सिद्धये मुक्तये स्तात्—भवतु—इति सम्बन्धः। किं० तथावर्णत्वात् ताम्रः रक्तवर्णो य·—"आ विधातरि मन्मथे"[ ]इत्यनेकार्थवचनात्—आ मन्मथ.,तस्मिन् य इव यम इव आचरन् यन् ताम्रायन्। पुनः किं० न खमण्डली नः सवित् तदेव खमण्डलं सूर्यमण्डलं नखमण्डल तद् विद्यते यस्य "अतोऽनेकस्वरात्" [ ७।२।६ ] इनि नखमण्डली। पुनः किं० प्रकृष्टा तिर्ज्ञानं यस्य स प्रतिर्ज्ञानवान् यत्यादिको जनः तस्य ऊहं विचारमेव शल्कं शरणं करोति णिजि क्विपि प्रत्यूहशल्। पुनः कि? अः कृष्णस्तथा भानां भ्रमराणाम्-'प्लुपश् स्नेहन०, [१५६२] इति घञि-प्लोषः स्नेहो यस्मिन् तद् भप्लोषं कमलम् असाधारणविशेषणात् अश्च भप्लोषं च अभप्लोषे तौ एति गच्छति क्विपि अभप्लोषेत् ईदृशी या [ई] लक्ष्मीस्तां प्राति पूरयति "आतो ड०" [ ५।१।७६] इति डे अभप्लोषेदीप्र·। या लक्ष्मी. कृष्णे कमले च क्रीडार्थं गच्छति, तां सेवकाना पूरयतीत्यर्थः। तथा दीपाङ्कुरवत् असति शोभते क्विपि दीपाङ्कुराः, विश्वोद्यो-तकत्वात्। तयोर्विशेषणसमासे अभप्लोपेदीप्रदीपाङ्कुरा. ॥७०॥

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।**
**प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥७१॥**
**[ [1]सिद्धयेऽवर्धमा नः स्तात् ताम्रायन्न खमण्डली।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायै-ते ॥७१॥ ]**

[ १ सिद्धये चतुर्थी। २ अव+र्+ध+म+अस् अवर्धमा । अय शब्द 'धर्म' शब्द सूचयति ३ षष्ठी। ४ क्रियापदम्।५ ताम्र+अस्=ताम्रा। ई+अन्न=यन्न। ताम्रा+यन्न=ताम्रायन्न। ६ खमण्डल+इन्=खमण्डली। ताम्रायन्न+खमण्डली=ताम्रायन्नखमण्डली। ७ प्रति पा-ङ्कुराय-ते प्रति इति अन्वय। ऊह+शल=ऊहशल+भ+प्लोषे=ऊहशलभप्लोषे। प्रति+ऊहशलभप्लोषे प्रत्यूहशलभ-प्लोषे। ८ दिन+णिच्+क्विप्=दिन्—दी प्रथमैकवचनम्। ९ प्र+दा+क्विप्=प्रदी प्रथमैकवचनम्। १० प+अङ्कुर+अय+ता=पाङ्कुरायते द्वितीयाद्विवचनम्। दी+प्रदी+पाङ्कुरायते=दीप्रदीपाङ्कुरायते। ]

व्याख्या—'धम' इति वर्णद्वयम् असति आदत्ते क्विपि धमा· तथा अवः गच्छन् रकारो यस्मिन् स अवर् एतावता धर्मो यतेर्जितेन्द्रियस्य जिनस्येत्यर्थः नः अस्माकं सिद्धये स्तात्—भवतु—इति सम्बन्ध·। धर्म· किं० ताम्रं धातुभेद· उपलक्ष-णत्वात् सुवर्णादि, तेन असति शोभते क्विपि ताम्रा· सुवर्णादि च दीप्यमाना ई लक्ष्मीः अन्न धान्यं च यस्मात् स ताम्रायन्नः धर्मेण सकलम् दिक्शोभिता पृथ्वी, अन्नम्—सम्पद्यत इत्यर्थः। तथा खं स्वर्ग· तस्य मण्डलं देशो विद्यते यस्य स

मण्डली राजा इव स्वर्गस्य स्वामी च स्वर्गस्य धर्माधीनत्वात्। पश्चात् ताम्रायन्नश्चासौ खमण्डली च ताम्रायन्नखमण्डली। पुनः किं० दिनं करोति णिजि क्विपि तल्लोपे सौ 'दीर्घङ्या व्०" [ १ । ४ । ४५ ] इति सेर्लोपे "नि दीर्घः" [ १ । ४ । ७५ ] इति दीर्घे दी इव–सूर्य इव–सूर्यसदृश इत्यर्थः। कस्मिन् ? ऊर्हिंसायां कर्त्तव्यभूतायां हं हस्तं शलयति चालयति अचि ऊहशलो हिंसापरायणः स एव भं नक्षत्रम् तस्य प्लोषे विनाशे इत्यर्थः। पुनः किं० प्रददातीति क्विपि परमते "ईर्व्यञ्जनेऽयपि"[४ । ३ । ९७] इति ईकारे प्रदीर्दाता। कथम् ? प्रति लक्ष्मीकृत्य, के[1] ? पाति रक्षति तापादिभ्यः इति क्विपि पम् तापव्यपोहकं यत् " धाराऽङ्कुरं वीसारे शीकरे जलदोपले" [ हैम०अनेका०स०चतुः-स्वरकां० श्लो० १६३२ ] इति अने[2]कार्थवचनात् " ते लुग् वा " [ ३ । २ । १०८] इति पूर्वपदलोपात्- अङ्कुर वातमिश्रं जलं तत्सदृशं यत् अयः शुभं कर्म, ता च लक्ष्मीः तयोरितरेतरद्वन्द्वे पाङ्कुरायते ॥ ७१ ॥

इत्यर्थद्वयेन श्रीजिनधर्मं वर्णयित्वा सिद्धान्तं वर्णयति–तथाहि—

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥ ७२ ॥**
**[ [1]सिद्धये व[2]र्धमानस्ता[3]ऽऽत्ताऽऽम्रा [4]यं न-[5]खमं [6]डली ।**
**[7]प्रत्यूहशलभप्लोषे [8]दीं [9]प्रदीपां [10]कु[11]रायते ॥ ७२ ॥ ]**

१ [ सिद्ध +ए=सिद्धये । सिद्ध प्रथमान्तम् । 'ए' वर्ण पादपूरणाय । २ स्तन्–स्ता । वर्धमान+स्ता=वर्धमानस्ता–प्रथमान्तम् । ३ आत्त+आम्र+अस्=आत्ताम्रा –प्रथमान्तम् । वर्धमानस्ता+आत्ताऽऽम्रा –वर्धमानस्तात्ताम्रा । ४ यम्+न=यन्न० । यम् इति द्वितीयान्तम् । ५ न+ख+मम् नखमम् 'यम्' इत्यस्य विशेषणम्–द्वितीयान्तम् । ६ ड+ली=डली प्रथमान्तम् । ७ प्रति+ऊ+ह+शर+भू=प्रत्यूहशरभ–प्रत्यूहशलभ+प्लोषे=प्रत्यूहशलभप्लोषे सप्तम्यन्तम् । ८ दिन+णिच्+क्विप्–दिन्=दी–प्रथमान्तम् । ९ प्रदीप्+आम्=प्रदीपाम् षष्ठीबहुवचनम् । १० कु प्रथमान्तम् । ११ अयिधातो आत्मनेपदिन ह्यस्तन्याम् तृतीयपुरुषैकवचने 'त' प्रत्यये आयत । आयत+ई =आयते =आयते । कु +आयते=कुरायते । प्रदीपाम्+कुरायते=प्रदीपाङ्कुरायते । ]

व्याख्या —'ए' इति पादपूरणे। " ते लुग् वा " [ ३ । २ । १०८ ] इत्युत्तरपदलोपात् सिद्धः सिद्धान्तः आत्तो गृहीतः–अर्थात् पठितुकामैः स्वीकृतः सन् अतिमधुरतया आम्रवच्चूतफलवत् शोभते क्विपि आत्ताम्राः भवतु इत्यर्थघटना–अयमर्थः– पाठिनां सहकारफलवन्मधुररसपोषको भवतात्–इत्यर्थः । किं० 'स्तन शब्दे' [ ३२३ ] " अहन्पञ्चम० " [ ४ । १ । १०७ ] इति दीर्घे " नाम्न'० " [ २ ।

---

१ 'के' इति द्विवचनं प्रतिभाति, तच्च 'लक्ष्मीकृत्य' इत्यस्य कर्म । २ अनेकार्थसंग्रहे एवं पाठः–" धाराङ्कुरः शीकरे स्यान्नासीरे जलदोपले " इति।

१ । ९१] इति नञोपे स्ता वाचकः कथयिता इति यावत्, तस्य विशेष्यविवक्षया पूर्वनिपाताभावे वर्धमान चरमजिनः स्ता वाचको यस्य स वर्धमानस्ता वर्धमानप्ररूपित इत्यर्थः । यद्यपि सिद्धान्तः श्रीगौतमादिगणधरै रचितः तथाप्यर्थप्ररूपकत्वात् तस्यैव प्राधान्यात् श्रीवर्धमानेनैव–इति । यदुक्तम्—

"अत्थं भासइ अरहा, सुत्तं गंथंति गणहरा निउणं"[1] । [ आवश्यक नि० गा० ९२ कोट्याचार्यवृ०पृ० ३४२ ] इति । स इति तच्छब्दो ग्राह्यः । सः कः ? इत्याह-यं सिद्धान्तम्–'ईङ्च् गतौ' [ १२५२ ] गत्यर्थानां ज्ञानार्थत्वाद्–ईयते जानाति तत्त्वातत्त्वमिति क्विपि ईः तत्त्वज्ञो जनः । आङ्पूर्वाद् 'अयि गतौ' [ ७९० ] इत्यतो ह्यस्तन्यन्यदर्थैकवचने-आयत–आगच्छत्–आश्रयदिति यावत् पठनाद्यर्थमिति शेषः । यतो जनः किं ? "डः शिवे ध्वनौ" [ ] इत्येकाक्षरोक्तेः डम्–पठनध्वनिम्–'लीङ् [ च् ] श्लेषणे' [ १५४८] लीयते त्रिवपि डलीः उच्चैःस्वरं पठन्नित्यर्थः । पुनः किं ? दिनं करोतीति णिजि त्रिवपि दीः सूर्यः स इव–सूर्यसदृशः इत्यर्थः । कस्मिन् ? प्रतयः सिद्धान्तलिखितपत्रसञ्चयाः ताः लेखनेन 'अव रक्षण०' [ ४८९ ] इति करणार्थाद् अवेः अवति करोति क्विपि प्रत्यू: लेखनेन प्रतिकारको हो हस्तो येषां ते प्रत्यूहाः सिद्धान्तलेखकास्ते एव–शरं जलं तस्माद् भवन्ति 'क्वचित्" [ ५ । १ । १७१ ] डे र-लयोरैक्यात्–शलभानि कमलानि, तेषु विषयेषु 'प्लुषश् स्नेहन०' [ १५६२ ] इति घञि प्लोषः स्नेहः तस्मिन् । यथा रवेः कमले स्नेहस्तथा अस्यापि सिद्धान्तलेखकेष्वित्यर्थः । पुनः किं० कुः स्थानम्, कासां प्रदीपां कान्तीनाम् । यं किं० "नस्तु संविदि" [ ] इत्येकाक्षरोक्तेः–नः ज्ञानं नानार्थप्रतिपादिनम् तेन खश्च सूर्यश्च मश्च चन्द्रश्च समाहारद्वन्द्वे खमं सूर्यचन्द्रमिव आन्तरतमोभेदकत्वात् ॥७२॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीपदीपाङ्कुरायते ॥७३॥
[ सिद्ध ये[1] वर्धमानस्तात्ताम्रायन्न[4] खमण्डली[5] ।
प्रत्यूहशलभप्लोषे दी[6] प्रदीपाङ्कुरायते ॥७३॥ ]

[ १ सिद्ध +ए=सिद्धये । सिद्ध प्रथमान्तम् । २ ए+वर्धमान –एवर्धमान । एव सिद्धये-वर्धमान । एवर्धमान प्रथमान्तम् 'सिद्ध' इत्यस्य विशेषणम् । ३ तत्+ता=तत्ता+अण्=तात्ती+आ=कर्मधारयसमासे=तात्ता+म्लायन्=तात्ताम्रायन् प्रथमान्तम् । ४ 'न' निषेधवाची 'म्लायन्' इत्यनेन सह 'न' इत्यस्य अन्वय –न म्लायन् इत्यर्थ । ५ ख+मण्डल+इन्=खमण्डली । ६ 'दीन'शब्दस्य 'दी'प्रयोग 'दिन'शब्दस्य 'दी'निष्पादनरूपया पूर्वोक्तप्रक्रियया साध्य । ]

१ अर्थं भाषते अर्हन् सूत्रं ग्रथ्नन्ति गणधरा निपुणम् ।

व्याख्या— सिद्धः सिद्धान्तः, प्रतिकूला ऊहाः प्रत्यूहाः, त एव शलभाः पतङ्गाः तेषां प्लोपे विनाशे प्रदीपाङ्कुरायते प्रदीपाङ्कुरवदाचरति इति क्रियासम्बन्धः। किम्भूतः ? यद्यपि 'इङ्क् अध्ययने' [ ११०४ ] इति धातुः अधिपूर्व एव दृश्यते, तथापि उपसर्गस्यातन्त्रत्वात् इते अधीते लक्षणया धातूनामनेकार्थत्वाद् व्याख्याति बाहुलकात् केवलादपि विचि गुणे एः आख्याता वर्धमानो वीरजिनो यस्य स एवर्धमानः श्रीवीरप्रोक्त इत्यर्थः। पुनः कि० तस्य भावस्तत्ता तत्त्वं, तस्या इयं, "तस्येदम्" [ ६।३। १६० ] अणि तात्त्वी। तात्त्वी चासौ आश्च लक्ष्मीश्च तात्त्वा तत्त्वलक्ष्मीः म्लायन् म्लानीभवन् नेति निषेधे तत्त्वश्रीनिर्मल इत्यर्थः। पुनः किं० खः सूर्यस्तस्य मण्डलानि चतुरशीत्यधिकशतसङ्ख्याकानि आधेयतया विद्यन्ते यस्मिन् स "अतोऽनेकस्वरात्" [ ७।२।६ ] इति खमण्डली–सूर्यस्य मण्डलानि सिद्धान्ते एवाभिहितानि। यदुक्तं संग्रहणीग्रन्थे—

"[1]पनरस चुलसीइसयं, इह ससि रविमंडलाइं तक्खित्तं" [ बृहत्संग्रहणीसूत्र गाथा ८६–चन्द्रसूर्यमण्डलाधिकार ] इति।

पुनः किं० न दीनान् करोति परमानन्ददानेन निजपाठकान् इति णिजि क्विपि सौ "नाम्नो नो०" [ २।१।९१ ] इति नलोपे अदी ॥७३॥

**सिद्धये वर्धमानः स्तात् ताम्रा यन्त्रखमण्डली।**
**प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥७४॥**
**[ सिद्ध ! ये ऽवर्धमानस्तात्ताऽऽम्राऽयन्नं खमण्डली।**
**प्रत्यूहशलभप्लोपे दीप्रदीपां कुरायते ! ॥७४॥]**

[ १ सिद्ध !। २ या इत्यस्य सबोधनम ये ! ।३ 'वर्धमान'शब्दस्य नामधातुत्वे आचारार्थे क्विपि ह्यस्तन्या द्वितीयपुरुषैकवचने अवर्धमान इति क्रियापदम्। ४ ता+अत्ता=तात्ता+आम्ल= तात्ताम्ल—तात्ताम्र ! ५ अयम् प्रथमा। ६ न —षष्ठी—न। ७ खमण्डल—इन्= खमण्डली। ८प्रत्यूह+शय्+ड=प्रत्यूहशड+भ=प्रत्यूहशडभ-प्रत्यूहशलभ+प्लोषे। ९ दि+ई=दी+प्रदीपाम्=दीप्रदीपाम् षष्ठीबहुवचनम्। १० कुल+अस्=कुलास्+यति—कुलायति। अस्य सबोधने कुलायते—कुरायते।]

व्याख्या—हे सिद्ध ! सिद्धान्त !। हे तात्ताम्र ! ता लक्ष्मीः अत्ता माता यस्य स तात्तः कामः, तेन [2]म्लायति "क्वचित्" [ ५।१।१७१ ] डे तात्ताम्लस्तस्य स० हे तात्ताम्ल !। तथा हे कुरायते !—र लयोरैक्यात्—कुलं गृहम् अस्यन्ति त्यजन्ति क्विपि कुलासो गृहत्यागिनो यतयो यस्मात् स कुलायतिस्तस्य स०। साम्प्रतं यतयः सिद्धान्ताधारेणैव हि गृहादि मुक्त्वा संयम पालयन्ति। तथा हे ये ! या लक्ष्मीरिव

१ पञ्चदश चतुरशीतिशतम्। इह शशिरविमण्डलानि तत्क्षेत्रम्।

२ अत्र' तात्ताम्ल' प्रयोगसाधनाय 'आम्लायति' इति उचितम्। अन्यथा 'तात्तम्ल'इत्येव स्यात्।

रा, तस्याः सं०, श्रोतॄणां कमलासम्पत्तेः । त्वं नः अस्माकम् अवर्धमानः वर्धमान इव वीरजिन इव आचरः इत्यर्थ. । कस्मिन्[२] प्रत्यूहाः प्रतिकूला ऊहा' संशया इति यावत् । तथा शयम्–निद्रां मूढत्वमिति यावत्–करोतीति णिजि क्विपि तल्लोपे शय् मौढ्यकर्ता य'— ड-लयोरैक्यात् "डः शिवे ध्वनौ" [ ] इत्येकाक्षरवचनात्—डो ध्वनिर्वचनमिति यावत् । पश्चाद् घोषवति परे "व्यो." [१।३।२३] इति यलोपे शडः कुत्सितवचनम्. प्रत्यूहाश्च शडश्च प्रत्यूहशडौ, तयोर्विषये भाति प्रत्यूहशलभो यः प्लोषो विनाशस्तस्मिन् । त्वं किं० अयं प्रत्यक्ष' । पुनः किं० खस्य ज्ञानस्य मण्डली इव श्रेणिरिव खमण्डली ज्ञानस्य तदाधारत्वात् । न. किं० 'डुदांग्क् दाने' [ ११३८] इत्यतः "इ-कि-श्तिव्०" [५।३।१३८] इति किप्रत्यये "इडेत्पुसि चातो लुक्" [४।३।९४] इति आल्लुकि दिर्ज्ञानम्, तथा ई लक्ष्मीस्तया प्रदीप्यामहे इति क्विपि दीप्रदीपस्तेषां दीप्रदीपाम् दानिनामित्यर्थः ॥७४॥

इत्यर्थत्रयेण श्रीजिनोक्तं सिद्धान्तं व्यावर्ण्य सकलकर्मक्षयोद्भूतां सिद्धिं वर्णयति –तथाहि—

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥७५॥**
**[ सिद्धये[१]वर्धमा[२] नः[३] स्तात्[४] ताम्रायन्नखमण्डली[५] ! ।**
**प्रत्यूहशल्[६] अभप्लोषे[७] ! दीप्रदीपाङ्कुरायते[८] ! ॥७५॥ ]**

१ [सिद्धे ! सबोधनम् । २ एवर्धमा प्रथमैकवचनम् । एव+ऋद्ध+मा–एवर्धमा । ३ न षष्ठी । ४ स्तात् क्रियापदम् । ५ ताम्र+अम्=ताम्रास्+अत्=ताम्रायत् । न+ख+मण्डल=नखमण्डल+इन्–नखमण्डली।ताम्रायत्+नखमण्डली=ताम्रायन्नखमण्डली+ई=ताम्रायन्नखमण्डली –विसर्गाऽभावे अस्य सबोधनम्–ताम्रायन्नखमण्डली ! । ६ प्रत्यूह+शल्=प्रत्यूहशल् प्रथमान्तम् । 'शल्' धातो 'शड्' इति कृत्वा 'शल' सजायते । ७ अ+भ+प्लोषि=अभप्लोषि –अस्य संबोधनम्–अभप्लोषे ! । ८ दीप्र+दीप+अङ्कुर+आयति=दीप्रदीपाङ्कुरायति –सबोधने–दीप्रदीपाङ्कुरायते ! । ]

व्याख्या—हे सिद्धे ! मुक्ते ! हे ताम्रायन्नखमण्डलीः ! – ताम्र धातुभेद. उपलक्षणत्वात् सुवर्णादि, तद्वत् सकलकर्ममलविमुक्तत्वेन असन्ति शोभन्ते क्विपि ताम्रासो हेमवद् दीप्यमानाः । तथा अ इव–कृष्ण इव -आचरन्तः "कर्तु. क्विप्०" [३।४।२५] इति क्विपि शतरि अन्त' ये–ना ज्ञानम्, खं सुखम्, तयोर्मण्डलं समूहो विद्यते येषां–ते नखमण्डलिन आत्मानः । पदत्रयस्य समासे ताम्रायन्नखमण्डलिन, तान् । 'ईङ्च् गतौ'

१ 'दिर्दानम्' इति समुचितम् अर्थानुसारेण ।

[ १२५२ ] ईयते श्रयतीति क्विपि ताम्रायन्नखमण्डली: तस्या: स० । अत एव हे दीप्रदीपाङ्कुरायते ! दीपाङ्कुरा इव प्रदीपा इव, तद्वद् देदीप्यमानत्वाद् दीपाङ्कुरा' सिद्धाः तेषाम् आयतिर्विस्तार' प्रभावो वा दीपाङ्कुरायति' । दीप्रा दीपाङ्कुरायतिर्यस्यां सा दीप्रदीपाङ्कुरायतिस्तस्याः सं० । तथा हे अभप्लोषे ! न भाति "क्वचित्" [५।१।१७१] इति डे अभ' अशोभमान. अविद्यमान इति यावत् । 'प्लुषू दाहे' [ ५३३ ] "इकिश्तिव्०" [५।३। १३८] इति इप्रत्यये प्लोषिर्दाहः सन्तापः—यस्यां सा अभप्लोषि:, तस्याः सं० । त्वं नः अस्माकं संबन्धिनी स्तात्—भव—इति क्रियासंबन्धः । त्वं किं० प्रत्यूहा विघ्ना जन्म-जरा-मरणादयस्तान् शटसि क्षयं नयसि क्विपि प्रत्यूहशड् ड-लयोरैक्यात्लत्वं प्रत्यूहशल्। पुन' किं० एवर्धमा "एवः केवलः" [ उणादिसूत्र ५०५ ] इत्युणादिवचनात् । एवाः सर्वकर्मविमुक्तत्वेन केवला ऋद्धाः समृद्धा' तेषां मा इव लक्ष्मीरिव एवर्धमा—सिद्धानां मुक्तिरेव लक्ष्मीरिति ॥७५॥

इति श्रीजिनशासनानुगामितीर्थंकर-तीर्थाधाराधनोद्भूतां सिद्धिं वर्णयित्वा जैनमतानुगामिनं श्राद्धं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥ ७६ ॥
[ सिद्धये[1] वर्धमाऽनस्ता[2]ऽऽत्ताऽम्रायन् नखमण्डली[3]: ।
[4]प्रत्यूहशलभप्लोषे ! ऽ[5]दीप्रदीपाङ्कुराऽयते[7] ! ॥ ७६ ॥ ]

[ १ सिद्ध+या=सिद्धय+इभ्य+सिद्धयेभ्य+णिव्+क्विप्=सिद्धयेव्+अर्द्=सिद्धयेवर्द्+ह=सिद्धयेवर्द्ध+मा+अनस्=सिद्धयेवर्द्धमाऽनस्+ता=सिद्धये वर्द्धमानस्ता+आत्त+अम्लायत्=सिद्धयेवर्द्धमाऽनस्ताऽऽत्ता-ऽम्लायत्=सिद्धयेवर्धमानस्तात्ताम्रायत् । ३ नख+मण्ड+ली=नखमण्डली —नखमण्डली । ४ प्रति+ऊह=प्रत्यूह+शर=प्रत्यूहशर+भू=प्रत्यूहशरभ=प्रत्यूहशलभ । प्र+उषा=प्रोषा—प्लोषा । प्रत्यूहशलभ+प्लोषा—सबोधनम्—प्रत्यूहशलभप्लोषे ! । ५ 'दीप्रदीप'शब्दात् 'दी'वर्णस्य निष्कासने 'प्रप' इति । तस्य सबोधनम् प्रप ! इति । ६ दीप्रदीपाङ्कुर इत्यत्र 'अङ्कुर' इति नाम्न धातुत्वे आचारार्थे क्विपि द्वितीयपुरुषैकवचने पञ्चम्या 'हि' प्रत्ययान्तम् क्रियापदम् । ७ अयते ! सबोधनम् । ]

व्याख्या—शब्दानां विरोध्यर्थप्रतिपादकत्वाद् न यतिः अयतिः श्राद्धः—'असुखं दुःखम्' इतिवत्—तस्य सं० हे अयते ! श्राद्ध ! हे प्रत्यूहशल[ भ- ] प्लोषे ! प्रत्यूहाः प्रतिकूला ऊहा परस्त्रीगमनादिविषये दुष्टा मतिविलासास्त एव शरं जलं तस्माद् भवन्ति "क्वचित्" [ ५ । १ । १७१ ] डे शलभानि कमलानि तेषु विषये प्रकृष्टा उषा इव रात्रिरिव प्रत्यूहशलभप्लोषा तस्य सं० "एदापः"

[ १ । ४ । ४२ ]इति एवम् । यथा रात्रौ कमलानि निःश्रीकाणि भवन्ति, तथा अस्मिन् प्रत्यूहा अपीत्यर्थः । तथा हे अदीप्रदीप ! न विद्यते'दी' इति वर्णो यस्मिन् स अदीः ईदृशश्चासौ प्रदीपश्च अदीप्रदीप ! एतावता प्रपः—रक्षकः—प्राणिनामिति शेषः—तस्य सं० हे प्रप ! रक्षक ! त्वम् अङ्कुर नवीनोद्गतजलादेः प्ररोहवत् आचर-इत्यर्थः । यथा अङ्करो दिनं दिनं वृद्धिं याति, तथा त्वमपीत्यर्थः । त्वं किं० सिद्ध्येवर्धमानस्तात्ताम्रायन् । सिद्धा सम्पन्ना या लक्ष्मीर्यस्य स सिद्धयः, ईदृशो य इभ्यः सिद्धयेभ्यस्तं धनधान्यादिमनोऽभिमतप्राप्त्यर्थमाख्याति णिजि क्विपि तयोर्लोपे "पदस्य" [ २ । १ । ८९ ] इति यलोपे सिद्धयेब् ईदृशो य' 'अर्द गति-याचनयोः' [ ३०१ ] इत्यतः क्विपि "रात् सः" [ २ । १ । ९० ] इति दलोपाभावे अर्द् याचकजनः सिद्धयेबर्द्, तस्य हो हस्तः सिद्धयेबर्धः तस्मिन् मा लक्ष्मीः "अनः शकटं भोजनम् अन्नं च" [ उणादिसूत्र ९५२ ] इति उणादिवचनात्—अनो भोजनं यस्य स सिद्धयेबर्धमाना' तस्य भावे तलि सिद्धयेबर्धमानस्ता तस्या आत्तं स्वीकारः तेन न म्लायतीति शतरि सिद्धयेबर्धमानस्तात्ताम्लायन् । कोऽर्थः ? लक्ष्मीसमृद्धमहेभ्यप्रार्थकार्थिसार्थहस्तदत्तलक्ष्मी-भोजनादितया अम्लानः इत्यर्थः । पुन' किं० ? नखैः कृत्वा मण्डं भूषां लीयसे श्लिष्यसीति क्विपि नखमण्डलीः सामुद्रिकशास्त्रोक्तलक्षणनखशोभित इत्यर्थः ॥७६॥

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥ ७७ ॥**
**[ [1]सिद्ध[2]येवर्[3]धमानस्[4]ताऽऽत्ताऽऽम्रा [5]यन्नखमन् ! [6]डली ।**
**[7]प्रत्यूह-शल-भप्लो [8]षेदीप्र ! [9]दीपाङ्कुरा यते[10] ॥ ७७ ॥ ]**

[ १ हे सित् ! सबोधनम् । २ धयेव इति 'धे' धातो सप्तम्या अस्मत्पुरुषद्विवचन क्रियापदम् । ३ ऋधमान' षष्ठ्या एकवचन यते इत्यस्य विशेषणम् । ऋ+धा=ऋध+मान+णिच् +क्विप्=ऋधमान् तस्य । सित्+धयेव+ऋधमान =सिद्धये वर्धमान इति । ४ ता+आत्त+आम्र= ताऽऽत्ताऽऽम्रा द्वितीयाबहुवचनम् डली इत्यस्य विशेषणम् 'धयेव' इत्यस्य च कर्मरूपम् । ५ अन्न+ख+मन्द+णिच्+क्विप्=अन्नखमन् ! सबोधनम् । ० तात्ताम्रास्+अन्नखमन् !=तात्ताम्रायन्न खमन् ! । ६ डली द्वितीयाबहुवचन कर्म । ७ प्रति+ऊह+शर+भ+प्लु=प्रत्यूहशलभप्लौ तस्य षष्ठ्या एकवचने प्रत्यूहशलभप्लो । ८ षा+ई=षे+दीप्र=षेदीप्र ! संबोधनम् । ९ दीपाङ्कुरा द्वितीयाबहुवचनम्, डली इत्यस्य विशेषणम् । १० यते इति षष्ठ्यन्तमेकवचनम् । ]

व्याख्या—कश्चिदिभ्य श्राद्धः कञ्चिदिभ्य श्राद्धं प्रति धर्माशीर्वादं करोति—तथाहि —हे षेदीप्र ! इभ्य ! 'ष' श्रेष्ठे" [ ] इत्येकाक्षरात् षा श्रेष्ठा ई लक्ष्मीस्तया दीप्र सकलजने दीप्यमानः तस्य स० । 'षिवू गत्याम्' [ ३२० ] गत्यर्थाना ज्ञानार्थत्वात्

सेवति जानाति तत्त्वातत्त्वमिति क्विपि सित् तत्त्वातत्त्वज्ञ' तस्य स० । तथा अन्नेन खानि इन्द्रियाणि मन्दयति क्विपि सौ अन्नखमन् तस्य सं० हे अन्नखमन्! श्राद्धा अपि ज्ञाततत्त्वा' स्तोकाहारादिना स्वैतुर्यपालनादिनिमित्तम् इन्द्रियाणि मन्दयन्ति । आवां यते' साधो डो ध्वनिस्तस्य लीः श्लेषस्तस्य ई लक्ष्मीः । 'ट्धें पाने' [२८] इत्यतः सप्तम्यस्मदर्थद्विवचने धयेव -पिबेव-इत्यर्थः । यतो डश्री किम्भूता.? ता लक्ष्मीस्तया आत्ताः स्वीकृता व्यवहारिण' तात्ता तेषां तेषु वा आम्रवत् सहकारफलवदाचरन्ति क्विपि धातुत्वे अचि तात्ताम्रा श्रोतॄणां मधुरा इत्यर्थः । पुनः किं० तत्त्वातत्त्वप्रकाशकत्वात् दीपाङ्कुराणाम् आ' श्रिय इव दीपाङ्कुरा' । यते' किम्भूतस्य ? ऋर्दवमाता ता धयन्ति निजमातृत्वात् "क्वचित्" [ ५ । १ । १७१ ] डे ऋधाः देवास्तेभ्यो मानः पूजा यस्य स ऋधमान जिन तं श्रोतॄणामाख्याति णिजि क्विपि तयोर्लोपे ऋधमा तस्य ऋधमान, पश्चाद् 'अवर्णस्येवर्णादिना०" [ १ । २ । ६ ] इति सिद्धम् । यते. पुन किम्भूतस्य ? प्रपूर्वाद् 'अयि गतौ' [ ७९० ] इत्यत' क्तौ 'य्वो प्वय्०" [ ४ । ४ । १२१ ] इति यलोपे, परमते "अतः" [ ४ । ३ । ७२ ] इत्यल्लोपे प्रतिर्ज्ञानम्, ऊहो विचार, शरः-उपचारात्-धनुर्विद्या, भानि नक्षत्राणि-उपचारात्-ज्योतिषग्रन्थ. प्रत्यूहशलभानि प्लवते गच्छति श्रयति य. इति यावत् विचि गुणे प्रत्यूहशलभप्लौः तस्याम् । "एदोद्भ्यां ङसि-ङसो र'" [ १ । ४ । ३५ ] इत्यैात्वे सिद्धम् ॥७७॥

इति अर्थद्वयेन श्राद्धं वर्णयित्वा सामान्यव्यवहारिणं वर्णयति तथाहि—

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥७८॥**
**[ सिद्धयेवर्धमानस्ताऽत्ताम्रायं न खमण्डली ।**
**प्रत्यूहशलभलोपे दीप्रदीपांकुरायंते ७८ ॥]**

[१ हे सित् ! सवोधनम् । सित+णिच्+क्विप्=सित् । २ 'हयेव' इति क्रियापदम्—सप्तम्या अस्मत्पुरुपस्य द्विवचनम् । ३ ऋद्ध+म=अनस्+ताय्=ऋद्धमानस्ता+अत्=ऋद्धमानस्तात्! संवोधनम् । सित्+हयेव+ऋद्धमानस्तात्+सिद्धयेवर्धमानस्तात् । ४ ताम्+रायम्=ताम्रायम् । ५ न निषेधवाची । न हयेव? अपि तु 'हयेव' इति आशय । ६ ख+मण्डलीम्=खमण्डलीम्—'रायम्' इत्यस्य द्वितीयान्तस्य विशेषणम्—खमण्डली । ७ प्रत्यूह+शलभ+प्लोपे—सप्तम्यन्तम् । ८ दीप्रदीपाम्—द्वितीयान्तम् 'रायम्' इत्यस्य विशेषणम् । ९ कु+रा+क्त्वा=कुराय संबन्धकभूतकृदन्तम् । १० ता+ई+क्विप्=ते इत्येवम् एकारान्त'ते'पदस्य सवोधनम् 'सित्' इत्यस्य विशेषणम् ।]

१—स्वचतुर्थव्रत—ब्रह्मचर्यव्रत—प्रमृतिव्रतपालनादिनिमित्तम् इति आशय । २—'यते' इत्यस्य विशेषणत्वेन अत्र 'तस्य' इति युक्तम् । ३ "एदोद्भ्या ङसि—ङसो र" [१।४।३५] इति सूत्रेण रविधानात् अत्र 'इति रत्वे' इति समुचितम् ।

व्याख्या—तां लक्ष्मीम् ईयते गच्छति श्रयति इति यावत् क्विपि तेः तस्य स–हे तायिने ¹–हे ते ! हे व्यवहारिन् ! सितान्–बद्धान् वन्दिजनानिति यावत्–आख्याति च्छोटनबुद्धया इति क्विपि सित् तस्य स० हे सित् ! वन्दिजनच्छोटक ! व्यवहारिणो 'बन्दिजनच्छोटक' इतिबिरुदत्वात् । तथा ऋद्धः समृद्धो यः–" मः शिवे विधौ " [ ] इत्येकाक्षरवचनात्—मो विधिः तस्य अनः शकटं तां तायते वहनेन पालयति क्विपि ऋद्धमानस्ता हंसस्तद्वद् अतति गच्छति क्विपि ऋद्धमानस्तात् तस्य स० हे ऋद्धमानस्तात् ! । आवां रुचितगतिं रुचिरगते ! आवां तां प्रसिद्धां [ न्या ] योपार्जनेन राय कुपात्रादिभ्य' प्रधानेन³ कुराय कुत्सितं रात्वा दत्त्वा न हयेव² न क्लाम्येव² अपि तु पं⁴ ...कल्यफलप्राप्त्या क्लाम्येव । अत्र 'हय हर्य क्लान्तौ च' [३९७] इत्यतः सप्त'यस्मदर्थैकद्विवचने⁵ 'हयेव' इति रूपम् । रायं किं० खं सौख्यं तस्य मण्डलीमिव श्रेणीमिव खमण्डली–श्लेषादनुस्वाराभावः–द्रव्यस्य सुखहेतुत्वात् । पुनः किम्भूतः ? दीप्रो यो दीपः, तद्वत् आचरति क्यनि, तल्लोपे दीप्रदीपा, तां दीप्रदीपां प्रदीपसदृशाम् । कस्मिन् ? प्रत्यूहा विघ्ना रागदम्भादयस्त एव शलभाः पतङ्गास्तेषां प्लोषे दाहे अत्र च 'रै' शब्दः ऐदन्तः पुंलिङ्ग' स्त्रीलिङ्ग', अत्र तु स्त्रीलिङ्ग' । तामित्यत्र विरामविवक्षयाऽनुस्वाराभाव' ॥७८॥

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥७९॥**
**[ सिद्धये¹वर्धमां²नस्ताऽऽततां³म् ⁴रायन् ⁵नं खमण्डलीं⁶ ।**
**प्रत्यूहशल्⁷ अभप्लोऽषे⁸दीप्र⁹दीपां¹⁰ कुरायं¹¹ ते¹² ॥७९॥ ]**

[१,-सिद्ध+या=सिद्धय । अस्य सबोधने सिद्धय ! । २ ई+वर्ध+मू+विच्=ईवर्धमो=अस्य ओकारान्तपदस्य द्वितीयान्तम् ईवर्धमाम् ३ नस+तल्=नस्ता+आततम्=नस्ताऽऽततम्–द्वितीयान्तम् । 'कुरायम्' इत्यस्य विशेषणम् । ४ रै+क्विप्+शतृ=रायन्–प्रथमान्तम् । ५ न निषेधवाची । 'अष' इति क्रियापदेन सह अस्य सबन्ध —न 'अष'—न गृहाण इत्यर्थः । ६ ख+मण्ड+ली+इम्=खमण्डलीम् द्वितीयान्तम् । ७ प्रति+ऊह- शद्=प्रत्यूहशड्=प्रत्यूहशल्–प्रथमान्तम् । ८ अभ+प्लुषू+ड=अभप्ल –प्रथमान्तम् । अभप्ल +अष=अभप्लोऽष । ९ 'अष' इति 'अष' धातो पञ्चम्या 'हि' प्रत्यये रुपम्–'अषी असी गत्यादानयोश्च' [९३१] ।१० ड+दीप्र+दीप+अच्=इदीप्रदीपाम् द्वितीयान्तम् । प्रत्यूहशल+अभप्लोऽष+इदीप्रदीपाम्=प्रत्यूहशलभप्लोऽषेदीप्रदीपाम् । ११ कु+रायम्=कुरायम् द्वितीयान्तम् 'ईवर्धमाम्' इत्यस्य विशेष्यम् । १२ ते–तव । अत्र '० प्रदीपा' इति पद विहाय सर्वे अनुस्वारा न गणनीया ।]

---

१ सबोधने तायिन् ! इति भवति न तु तायिने, 'तायिने' इति चतुर्थ्यन्तम्, एव पाठोऽयमशुद्ध । तथा अत्र प्रसङ्गे 'तायिन्' अथवा 'तायिने' इति पदद्वयमपि नोपयुक्तम् । २ इद क्रियाविशेषण प्रतिभाति । ३ अत्र 'प्रदानेन' इति युक्तम् । ४ अत्र निर्दिष्टबिन्दूना स्थाने 'रत्र अ' इति योज्यम् । अत 'परत्र अकल्यफल' इति समग्र जायते । ५ अत्र '०दर्थे द्विवचने' इति पाठ उपयोगी ।

व्याख्या—सिद्धा सम्पन्ना या लक्ष्मीर्यस्य स सिद्धयस्तस्य सं० हे सिद्धय ! इभ्य । त्वं कुरायं कुत्सितरायं द्रव्यम् अन्योपार्जितां लक्ष्मीं न अप-मा अङ्गीकुर्वित्यर्थः। यत' किं० ई लक्ष्मीस्तस्या वर्धो वृद्धिस्ता[1] 'मूङ् बन्धने ' [ ६०१ ] इत्यतो मैवति[2] बध्नाति विचि गुणे ईवर्धमौ ताम् " आ अम्-शसोऽता " [ १ । ४ । ७५ ] इत्य-कारे ईवर्धमाम् । अनुस्वाराभावो न दोषाय, चित्रकाव्यत्वात् । एवं सर्वत्र । पुनः किं० ' न (ण) सि कौटिल्ये '[ ५१ ] क्विपि भावे तञि नस्ता कौटिल्यं तेन आत्तां गृही-ताम् । अत्र तु विरामविवक्षया "तौ मुँमोर्व्यञ्जने०"[3] [ १ । ३ । १४ ] इत्यनुस्वाराभावः । एवं सर्वत्र । त्वं किं० रा स्वर्णं तद्वदाचरति निजशरीरकान्त्या इति शतरि रायन् । कुरायं किं० खं सुखं तस्य 'मडुड् वेष्टने' [ ६९२ ] इति परमते विभाजनार्थो[4] इत्यतो घञि मण्डो विभाग' पृथक्करणं तं लीयसे श्लिष्यसीति क्विपि खमण्डली ईदृगः इ' कामो यस्मात् सकाशात् सा खमण्डली तां श्लेषादनुस्वाराभावः । अत एव किं० इ. काम. स एव दीप्रोऽग्निस्तं दीपयतीत्यचि इदीप्रदीपा ताम् इदीप्रदी-पाम् । कस्य ? ते तवैव कामाग्निदीपिकामित्यर्थः । त्वं तु किं० अभः कामस्तं प्लोषति दहतीति "क्वचित्" [५ । १ । १७१] डे अभप्ल' कामघ्न इत्यर्थः । पुनः किं० प्रतिर्ज्ञानम् ऊहो विचार' ताभ्यां शटति जानातीति तत्त्वातत्त्वमिति क्विपि टस्य ड्त्वे ड-लयोरैक्याल्लत्वे प्रत्यूहशल ॥ ७९ ॥

इति श्रीजिनमतानुसारि सर्वं यथाक्रमं व्यावर्ण्य, प्रतिपक्षस्य शिवशासनस्य किञ्चिद् वर्ण्यते । तत्र त्रयो देवाः ब्रह्मा विष्णुर्महेश्वरश्च । तत्र प्रथमं ब्रह्माणमेव वर्ण-यति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥ ८० ॥
['सिद्धये [2]वर्ध [3]! मा[4]ऽऽनः [5]स्तात् [6]ताम्रायन्न[7]खमण्डली ।
[8]प्रत्यूह-शल-भ-प्लोपे-दीप्र-दीपा-ऽङ्कुरायतेः ॥ ८० ॥]

[ १–सिद्धये चतुर्थ्यन्तम् । २–व+ऋद्ध–वर्ध ! सबोधनम् । ३ म ! सबोधनम् । " म शिव चन्द्रमा वेधा "–एका० सुधा० श्लो० २७ । अर्थात् हे ब्रह्मन् ! इत्यर्थ । ४ अन्+घञ्= आन'–प्राणभृत । वर्ध+म+आन वर्धमान । ५ स्तात् क्रियापदम् । ६ ताम्र+अस्=ताम्रास+ अन० ताम्रायन्न० । ७ अन्न+ख+मण्डल्+णिन=अन्नखमण्डली । ८ प्र+तीव्=प्रत्यू+ह+शर+भ+ ( प्र+उषा ) प्रोषा+ई+दीप्र+दीप+अङ्कुर+आयति–तस्य प्रत्यूहशलभप्लोपेदीप्रदीपाङ्कुरायते । ]

१ ' ताम् ' इति उचितम । २ ' भवते ' इति शुद्धम । ३ " तौ मुमो व्यञ्जने स्वौ " इत्येव सूत्रस्यास्य शुद्धपाठ । ४ ' विभाजनार्थ 'इति सशुद्धम् ।

व्याख्या—हे म ! हे वर्ध ! व पद्मम्, तेन ऋद्धस्तस्य सं० । त्वं प्रपूर्वात् 'पीव मीव तीव नीव स्थौल्ये' [ ४६६–४६९ ] इत्यत कर्तरि क्विपि, वस्योटि प्रत्यूः पुष्टाः ये हो हस्त. प्राणिनाम्, शरा बाणा',भानि नक्षत्राणि, प्रकृष्टा उपा रात्रिः, ई लक्ष्मीः, दीप्रः अग्नि दीपः प्रदीपः, अङ्कुरा लतानां प्ररोहाः तेषामायतिर्विस्तारः, तस्याः सिद्धये निष्पत्तये स्तात्–भव–इति क्रियासंबन्धः । सर्वेऽपि पदार्था ब्रह्मणैव कृता इति मतं शिवशासने तस्य जगत्कारकत्वात् । पुनः कि० अन्नं धान्यम्. खानि चक्षुरादोनीन्द्रियाणि, तेषां मण्डलम्, तदवश्यं करोतीति धातुत्वे "णिन् चावश्यकाधमर्ण्ये"[ ५ । ४ । ३६ ] इति णिनि अन्नखमण्डली । त्वं कि० आन इव जीवनमिव आनः, तज्जीवनत्वाद् विश्वस्य । त्वं पुनः किं० ताम्रा रक्तवर्णस्तेन असति शोभसे क्विपि ताम्रा रक्तवर्ण इत्यर्थः । पीत-रक्तयोरैक्यात् ॥ ८० ॥

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥ ८१ ॥**
**[ सिद्धये[1] वर्ध[2] मानः[3] स्तात्[4] ताम्लायन्[5] न[6] खमण्डली[7] ! ।**
**प्रत्यूह[8] ! शरभप्लोषे[9] दीप्रदीपाङ्कुराय[10] ते[11] ॥ ८१॥ ]**

[ १ सिद्धये चतुर्थ्यन्तम् । २ वा+ऋद्ध !=वर्ध ! । 'वा' एवार्थे । ३ मान. प्रथमैक-वचनम् । ४ स्तात् क्रियापदम् । अस्य 'न'पदेन अन्वय । न स्तात् ? किन्तु स्तात् एव इति भाव । ५ म्ला+शतृ=म्लायत् । ता+म्लायत्=ताम्लायत् । ग्रन्थकारदर्शितरीत्या तु म्लानि+णिच्+क्विप्–म्लान् तत 'शतृ' प्रत्यये–' म्लानत् ' इति स्यात् ' म्लायत् ' इति न स्यात् । ६ न निषेधवाची । ७ ख+मङ्ग=खमन्+लडी=खमन्डली+ई=खमण्डली ! ८ प्रति+अवू=प्रत्यू+ह= प्रत्यूह ! । ९ शर+भ+प्र+वस्+क्विप्+शरभप्रोषे चतुर्थ्या एकवचनम् । १० चतुर्थ्यन्तम् । ११ ते तुभ्यम् ।]

व्याख्या—वा इत्येवार्थे । हे ऋद्ध ! समृद्ध ! तथा हे ताम्लायत् ता लक्ष्मीस्तया म्लायति म्लानिं करोतीति णिजि, क्विपि, तल्लोपे ताम्लायन्, तस्य सं० । ब्रह्मा विष्णुनाभिस्थपुण्डरीकपद्मे[3] निवसति, तं विष्णुना निजप्राणेशेन सम्भोगकाले पश्यन्तं विलोक्य लक्ष्मीर्लज्जावशात् म्लाना भवतीत्युक्ति । तथा हे खमण्डली ! खे नभसि मङ्गति गच्छति क्विपि "पदस्य" [ २।१।८९ ] इति गलोपे खमन् पक्षी अर्थाद् हंसः तेन 'लड विलासे' [ २५४ ] क्विपि व्यत्यये डल् सविलासं यथा स्यादेवम् ईयते गच्छतीति क्विपि खमण्डलीः, तस्य स० हंसवाहनत्वात् । तथा 'प्रति'पूर्वात् अवते-

१ 'इदम् एकवचनम् अयं बहुवचनी' एतदपि चित्रकाव्ये चलति–इति ज्ञेयम् । २ 'मण्डल' शब्दस्य नामधातुत्वे मण्डल करोति इति मण्डलयति इति मण्डल तत णिन्–मण्डली । ३ 'पद्मे निवसति' इति शुद्धम् ।

भावनार्थात् कर्त्तरि क्विपि, वस्योटि प्रत्यू. प्रतिभः हः हस्तो यस्य स प्रत्यूहः, तस्य सं० हे प्रत्यूह ! । कस्यै ? सिद्धये जगत्पदार्थविज्ञाने इत्यर्थ. । हे "ते तुभ्यं 'मानि पूजायाम्' [ ७४९ ] घञि मान. पूजा न स्तात् अपि तु भव-इति-क्रियाकारकयोजनम् । ते किम्भूताय ? र-लयोरैक्यात् शरं जलं तस्माद् भवतीति "क्वचित्" [ ५।१।१७१ ] डे शलभं कमलम् तत्र प्रकर्षेण वसतीति क्विपि, "यजादिवचे०" [ ४।१।७९ ] इति वृति "घस् वसः" [ २।३।३६ ] इति षत्वे चतुर्थ्यां शलभप्लोषे । पुन. किं० दीप्रदीपाङ्कुराय प्रदीपसदृशाय अर्थात् निजशरीरकान्त्या, सर्वपदार्थप्रकटीकरणेन वा ॥८१॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥८२॥
[ [1]सिद्धये ! [2]ऽवर्ध[3]मा [4]न[5]स्तात् [6]ताम्रा ! [7]यं [8]न [9]खमण्डली ।
[10]प्रत्यूहशलभप्लोषे दी[11]प्रदीपाऽङ्कुरा[12]यते ॥८२॥ ]

[ १ सिद्ध+यि=सिद्धयि , एतस्य सिद्धये ! संबोधनम् । २ अव क्रियापदम् । ३ ऋद्ध+मास्=ऋद्धमा । ४ न षष्ठीबहुवचनम् । ५ तात् चौरवाचक'त'शब्दस्य पञ्चम्येकवचनम् । ६ ताम्र ! सम्बोधनम् । आ !–'आ'शब्द ब्रह्म वाचक –सम्बोधनम् । ताम्र+आ=ताम्रा ! । ७ यम् इति द्वितीयान्तम् अत्र इत्थभूतलक्षणे द्वितीया । ८ न निषेधवाची । 'अङ्कुरायते ' इत्यनेन क्रियापदेन 'न'स्य अन्वय । ९ खमण्डली प्रथमान्तम् 'अङ्कुरायते' इति क्रियापदस्य कर्तृरूपं पदम् । १० प्रति+ऊह=प्रत्यूह+शरभ+प्लोष=प्रत्यूहशरभप्लोष —शरभस्य शलभत्वे— प्रत्यूहशलभप्लोषे–सप्तमी । ११ दीप्रदीप्रा प्रथमान्तम् 'खमण्डली' इत्यस्य विशेषणम् । १२ न अङ्कुरायते ? अपि तु अङ्कुरायते एव इति एतत् क्रियापदम् । ]

व्याख्या—रक्तवर्णत्वात् हे ताम्र ! हे आ !—ब्रह्मन् ! "आ विधातरि मन्मथे" [ ] इत्येकाक्षरवचनात् । हे सिद्धये ! सिद्धा सम्पन्ना यि: सरस्वती यस्मात् स सिद्धियस्तस्य स० । यो वेधसि यमे "इत्यनेकार्थवचनात् यस्य धातु: अपत्यं "अत इञ्"[ ६।१।३१ ]इति 'इञ्'प्रत्यये यि. सरस्वती त्वं न. अस्माकं "तस्तु तस्करे" [ ] इति वचनात् तात् चौराद् अव—रक्ष—इत्यर्थः । त्व किं० ऋद्धः असख्यप्रमाणत्वेन वृद्धः मा: मासो यस्य स ऋद्धमा । यदुक्तम्—"दैवे युगसहस्रे द्वे ब्राह्मम्"[ ] इति । देवानां द्वे युगसहस्रे ब्राह्मम् अहोरात्रम् । मासस्तु त्रिंशद्गुण एवैतस्मात् । स: कः ? यं ब्रह्माणं त्वा प्रति लक्षीकृत्य खमण्डली सुखश्रेणी न अङ्कुरायते अपि तु अङ्कुरायते एव । यथा अङ्कुरो वर्धते तथा खमण्डली अपि — इत्यपीत्यर्थ. । कस्मिन् सति ? प्रतिः ज्ञानम्, ऊहो विचार. समाहारद्वन्द्वे प्रत्यूहम् तदेव— र-लयोरैक्यात्—शरभान्

१ "यस्तु वाते यमेऽपि च"– "यश्च धातरि"–३५, ३६–सुधा० एकाक्षरनाम० ।
२ "तकारस्तस्करे युद्धे" ।२३। सुधा० एकाक्षरनाम० ।

अष्टापदजन्तून् प्लोषति–दहति–क्षयं नयति " कर्मणाऽण् " [ ५ । १ । ७२ ] इति अणि शलभप्लोषो मेघः तस्मिन् सति । यथा मेघे सति अङ्कुरो वर्धते तथा सुखमपि— ज्ञान-विचारयोः सतो— अस्येत्यर्थः । खमण्डली किं० दीप्रो दीप्यमानो दीपनं घञि दीपः कान्तिर्यस्याः सकाशात् सा दीप्रदीपा ॥८२॥

इति वृत्तार्थत्रयेण विधातारं व्यावर्ण्य नारायणं वर्णयति —तथाहि—

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥८३॥**

**[ सि[1]द्धये व[2]र्धमान [3]स्तात् [4]ताम्रा [5]यं [6]न खमँ[7]ण्डली ।**
**[8]प्रत्यूहशल् अभ[9]प्लोषेद् ई[10]प्रदीपाँम् [11]कुरायते[12] ॥८३॥ ]**

[ १ सिद्धये चतुर्थ्यन्तम् । २ वर्धमान प्रथमान्तम् । ३ स्तात् क्रियापदम् । ४ ताम्रा– 'ई' इत्यस्य विशेपण प्रथमान्तम् । ५ यम् द्वितीयान्तम् । ६ न निषेधसूचि पदम् । अस्य 'आयत' इत्यनेन अन्वय अर्थात् न आयत ? किन्तु आयत एव । ७ खमण्डली प्रथमान्तम् 'ई' इत्यस्य विशेपणम् । ८ प्रति+ऊ+ह=प्रत्यूह+शल्किन्+णिच्+क्विप्=प्रत्यूहशल् प्रथमान्तम् । ९ अ+भ=अभ+प्लोष+इन्ध्+क्विप्=अभप्लोषेत् । प्रत्यूहशल्+अभप्लोषेत्=प्रत्यूहशलभ प्लोषेत् । १० ई+दीप्र+दीप्+आम्=ईदीप्रदीपाम् षष्ठीबहुवचनम् । प्रत्यूहशलभप्लोषेत्+ईदीप्रदीपाम्=प्रत्यूहशलभप्लोषे दीप्रदीपाम् । ११ कु प्रथमा । १२ आयत+ई=आयते । 'अय्' धातो ह्यस्तन्या तृतीयपुरुषैक-वचनम् । ई लक्ष्मी ।]

व्याख्या—" वर्धमानो वीरजिने स्वस्तिकैरण्ड-विष्णुषु " । [ हैम० अने० सं० चतुःस्वरकां० श्लो० १५६१ ] इत्येनकार्थवचनाद् वर्धमानो विष्णुः सिद्धये अर्थात् सेवकानाम्-इति सम्बन्धः । यं विष्णुम् ई लक्ष्मीर्न आयत–नागता ? अपि तु कामकेलये आगतैवेत्यर्थः । अत्र " अयि गतौ " [ ७९० ] इत्यतो ह्यस्तन्यां रूपसिद्धिः । ई किं० ? खानि इन्द्रियाणि, तद्ग्राह्या विषया अपि, तेषां मण्डलम्–समूहम्–इच्छति इति क्यनि " क्यनि " [ ४ । ३ । ११२ ] इति ईकारे, क्विपि " अतः " [ ४ । ३ । ८२ ] इति अल्लोपे, " य्वोः प्वय्० " [ ४ । ४ । १२१ ] इति यलोपे खमण्डली–विषयेच्छुः–इत्यर्थः । पुनः किं० ताम्रा रक्ता अनुरागिणीत्यर्थः । पुनः किं० प्रति प्रतिकूल ऊर्हिंसको हः शिवो यस्य स [प्र]त्यूहः कामः तस्य शल्किनं मत्स्यं वाहनं निजपुत्रवाहनतया आख्याति णिजि क्विपि, तल्लोपे " पदस्य " [ २ । १ । ८९ ] इति कलोपे प्रत्यूहशल् । पुनः किं० अः कृष्णः तस्मिन् भातीति अभः स्वभर्तृविषये शोभमानः । ' प्लुषश् स्नेहन० ' [ १५६२ ] इत्यतो घञि प्लोषः स्नेहः तेन इन्धे दीप्यते क्विपि अभप्लोषेत् । पुनः किं० कुः स्थानम् । कासाम् ? ई पृथिवी तस्यां याः प्रदीपः कान्त्यस्तासाम् ॥८३॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥८४॥
[ [1]सिद्धये [2]वर्धमानस्तात् [4]ताऽऽम्रा [5]यन्नखमण्डली ।
[6]प्रत्यूहशरभप्लो[7]पेदी[8]प्रदीपां [9]कुरायते ॥८४॥ ]

[ १ सिद्धा+ई=सिद्धे । अस्य चतुर्थ्यां एकवचने सिद्धये । २ वर्धमान प्रथमान्तम् । ३ स्तात् क्रियापदम् । ४ ता+आ=म्ला+अम्=ताऽऽम्लाऽम्=ताऽऽम्लास्+यन्न०=ताम्लायन्न=ताऽऽम्रायन्न० । ५ ई+अन्न=यन्न+खमण्डली=यन्नखमण्डली प्रथमान्तम् । ६ प्रत्यूह+शर+व+भू+णिच्+क्विप्=प्रत्यूहशरभप् प्रथमान्तम् । ७ इ+क्विप्=इत् । र+उषा=रोषा+इत्=रोपेत्=लोपेत् प्रथमान्तम् । ८ प्र+दा+अङ्=प्रदा+क्यट्+क्विप्-प्रदी । ई+प्रदी =ईप्रदी । लोपेत्+ईप्रदी=लोपेदीप्रदी । ९ पा+कु+राय+ता=पाकुरायता+ई=पाकुरायते=पाकुरायते । प्रत्यूहशरभप्+लोपेत्=प्रत्यूहशलभप्लोपेत्+ईप्रदी+पाकुरायते =प्रत्यूहशलभप्लोपेदीप्रदीपाकुरायते । तत अनुस्वारवृद्धौ दीपाकुरायते । अत्र लोपेत्+ईप्रदी+पाकुरायते इति त्रयाणा पदाना विशेषणसमास ।]

व्याख्या—वर्धमानो विष्णु' सिद्धा—शाश्वती—चासौ ई लक्ष्मीश्च सिद्धेः ततः सिद्धये अविनश्वरसम्पदे स्तात्-भवतु इति क्रियासम्बन्धः । किम्भूता [1] ? लक्ष्मीः स्वकलत्रं तस्या' । आङ्पूर्वात् म्लायते' "उपसर्गादातः" [ ५ । ३ । ११० ] इति अडि आम्लाः म्लानिः तामस्यति व्यपनयति व्यवच्छेदयति क्विपि ताम्लाः र-लयोरैक्यात् । "रस्तीक्ष्णे वैश्वानरे कामे" [ ] इत्येकाक्षरवचनात् रः काम. तदर्थम् उषां रात्रिं "इंक् स्मरणे' [ १०७४ ] एति स्मरति क्विपि लोपेत् । ईदृशी या ई लक्ष्मीस्तस्या प्रपूर्वात् दैन्ये पालने'[६०४] [2] "उपसर्गादात. [ ५ । ३ । ११० ] इति अडि प्रदी [3] पालनम् इच्छतीति क्यडि [क्यनि] क्विपि लोपेदीप्रदीःतथा पाति रक्षति लोकान् इति क्विपि पा रक्षिका या कु' पृथिवी तस्या 'रांक् दाने' [अदादि०११]घञि रायो दाता भावे तलि पाकुरायता पृथ्वीदानमित्यर्थः । ताम् ईयते श्रयति क्विपि पाकुरायते' पश्चाद् विशेषणसमासे लोपेदीप्रदीपांकुरायते अनुस्वाराभावः पूर्ववत् । पुन' किं० ई लक्ष्मीस्तस्या अन्नम् जीवनमिव । तथा खमण्डलं विद्यते मूर्तितया यस्य "अतोऽनेकस्वरात्"[ ७। २६]इति इनि खमण्डली पश्चाद् विशेषणसमासे यन्नखमण्डली । पुन किं० प्रत्यूहा विघ्नास्त एव शरं जलं तस्मिन् व' कलश तस्माद् भवति क्विपि वभू' अगस्ति तमाख्यातीति णिजि क्विपि तल्लोपे सौ तस्या लुपि "ग-ड-द-बादेः०[२। १। ७७] इत्यादेर्वस्य भत्वे भस्य वत्वे, विरामविवक्षया "विरामे वा" [ १ । ३ । ५१ ] इति पत्वे प्रत्यूहशलभप्—अयमर्थः—प्रत्यूहजले अगस्त्यमाख्यातीत्यर्थ' । यो यस्य वैरी स तस्य नामाख्यानेनापि पीड्यत एव ॥ ८४ ॥

१ अत्र 'ताम्ला' पद साधनीयम् अत किंभूता ता ? इति पाठ समुचित । २ अत्र 'प्रपूर्वात् देंङ् त्रैङ् पालने' [ ६०४ ] इति पाठ एव योग्य 'प्रदा'प्रयोगसाधनाय । ३ 'प्रदा' इति उचितम् ।

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥८५॥
[ सिद्धयेवर्धमानस्ताऽऽत्ताऽऽम्रा यन्नखमण्डली ।
प्रत्यूहशलभ प्लोषेदीं प्रदीपां कुरायते ॥८५॥ ]

[ १ या+ई+यन्=येवा । सिद्ध+येवा=सिद्धयेवा । अत्र सिद्ध-येवपदयो विशेषणसमास –प्रथमान्तम् । २ ऋद्ध+मा+न+अस्=ऋद्धमान प्रथमान्तम् । सिद्धयेव+ऋद्धमान =सिद्धयेवर्धमान । ३ ताऽऽत्त+आम्र+अम्=ताऽऽत्ताम्रास् । ४ यन् प्रथमान्तम् । तात्ताम्रास्+यन्= तात्ताम्रायन् । ५ अख+मण्डल+इन्=अखमण्डली । यन्+अख० यन्नख० । ६ प्रती+ई=प्रती । प्रती+ऊ+हस+लभा (बहुव्रीहौ) प्रत्यूहशलभ प्रथमान्तम् । ७ प्लोषेत् क्रियापदम् । ८ ई द्वितीयाबहुवचनम् । प्लोषेत् इत्यस्य कर्मरूपम् । ९ प्रदीपाम् षष्ठीबहुवचनम् । १० कु प्रथमान्तम् । ११ ई+अण्=आय । त+इन्=ति । आय+ति=आयति । तस्य षष्ठयाम् आयते.–आयते । ]

व्याख्या–सिद्धो विख्यातस्तथा यां लक्ष्मीं कामकेलये ईयते गच्छतीति क्वनिपि येवा विष्णुः । पश्चाद् विशेषणसमासे सिद्धयेवा विष्णुः । ई लक्ष्मीः तस्या अयं "तस्येदम्" [ ६ । ३ । १६० ] अणि " वृद्धिः स्वर०" [ ७ । ४ । १ ] इति वृद्धौ आयः श्रीसंबन्धी यः, तस्य चौरस्य अपत्यम् "अतः" [ ४ । ३ । ८२ ] इति "अवर्णेवर्णस्य" [ ७। ४। ६८ ] इति अलोपे ति तस्य आयतेः । ईः लक्ष्मीः सम्पदः प्लोषेत्–दहेत्–अपहरेत् इत्यर्थः । अत एव किं० ई लक्ष्मीं प्रति लक्षीकृत्य अव्ययीभावे नपुंसकत्वे ह्रस्वत्वे प्रति या ऊर्गमनम् हसो हास्यम् तयोर्लभा प्राप्तिर्यस्य स प्रत्यूहशलभः । पुन किं० ऋद्धां समृद्धां मां ज्ञानम् न अस्यति व्यपनयति क्विपि ऋद्धमानः अत्र " अभ्वादेरत्व०" [ १ । ४ । ९० ] इति भ्वादिवर्जनाद् दीर्घाभावः । पुनः किं० ता लक्ष्मीः अत्ता माता यस्य स तात्तः काम स एव आम्रैः सहकारवृक्षैः असति शोभते क्विपि आम्राः वनम् तस्मिन् "यम् अम्भसि पन्नावपि"[ ]इत्येकाक्षरवचनात् यमिव आचरन् यन् जलसदृश इत्यर्थः । पुन किं०अखानि सम्पूर्णानि मण्डलानि देशा विद्यन्ते यस्येति इति अखमण्डली । पुन किं०प्रदीपां कान्तीनां कुः स्थानम् ॥८५ ॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥८६॥
[ सिद्धये वर्धमानः स्तात् ताम्राऽऽयन् नखमण्डली ।
प्रत्यूहशलभ प्लोपेदी ! प्रदीपाङ्कुरायं ! ते ॥८६॥ ]

[ १ सिद्धये चतुर्थ्या एकवचनम् । २ वर्धमान –प्रथमैकवचनम्–शकुनविशेषवाचकं । ३ स्तात् क्रियापदम् । ४ ताम्रा+आयत् । ५ आयत्त+णिच्+क्विप्=आयत् । ताम्राया आयत्= ताम्रायत्–प्रथमा–'नखमण्डली' इत्यस्य विशेषणम् । ६ नखमण्डली प्रथमान्तम् । ७ प्रत्यूह+शो+ ड=प्रत्यूहश+लभा (णिजि, क्विपि) प्रत्यूहशलभ –षष्ठ्यन्तम् । ८ प्लुष्+अच्=प्लोषा+ई=प्लोषे+दे+ क्विप्+प्लोषेदी –प्लोषदी ! सबोधनम् । ९ प्रदीप+अङ्कुरा प्रदीपाङ्कुरा 'नखमण्डली' इत्यस्य उपमाभूत पदम् । १० ० अङ्कुरा +अ+ते=अङ्कुरायते । अ ! सबोधनम् । ११ ते तव षष्ठी । ]

व्याख्या—'प्लुष् [ पुष् ] स्नेह-सेचन पूरणेषु' [ १५६२ ] इत्यतो "लिहादिभ्य." [ ५ । १ । ५० ] अचि प्लोषा स्नेहला या ई लक्ष्मी· ताम् 'देङ् पालने' [ ६०४ ] दयते पालयतीति क्विपि "ईर्व्यञ्जनेऽयपि" [ ४ । ३ । ९७ ] इति ईकारे परमते प्लोषेदी तस्य सं० हे प्लोषेदीः । तथा हे अ ! विष्णो ! ते तव नखमण्डली नखश्रेणी सिद्धये—सेवकानां कार्यसिद्धये—वर्धमानः शकुनविशेष· स इव स्तात्–भवतु–इति क्रियासम्बन्ध· । किं० आयत्तं वशं करोति णिजि आयत्तयति इति क्विपि सौ "पदस्य" [ २ । १ । ८९ ] इति तलोपे आयत्, ताम्रो रक्तवर्णः तस्या यद् वशीकारिणी—रक्ता इत्यर्थः । पुनः किं० प्र. प्रकृष्ट·– दीपनं घञि—दीप· कान्तिः तस्य अङ्कुरः-प्ररोह·—प्रदीपाङ्कुरा· । तव किम्भूतस्य [२] प्रत्यूहान् विघ्नान् श्यति "आतो डः०" [ ५ । १ । ७६ ] डे प्रत्यूहशो विनायक· तद्वद् लभां लाभं करोति इति णिजि क्विपि, तयोर्लोपे प्रत्यूहशलप् तस्य प्रत्यूहशलभ·—सेवकानां विनायकवल्लाभ-कारकः इत्यर्थः । विनायको हि लोके लाभकर· प्रख्यातः इति एवमुक्ति· ॥८६॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीपदीपाङ्कुरायते ॥८७॥
[ सिद्धये[१] ! वर्धमाऽऽनः[२] स्तात्[३] ताम्रा[४] यं[५] न[६] ख[७]म् अ[८]ण्डली[९] ।
[१०]प्रत्यूह शे[११] [१२]लभप्लोषे [१३]दीपदीपाङ्कुराऽऽयते[१४] ? ॥८७॥ ]

[ १ सिद्धये–सिद्ध +ए !=सिद्धये ! । सिद्ध· प्रथमान्तम् । ए ! संबोधनम् । २ वर्धमान अथवा वर्ध+मा+आन =वर्धमान प्रथमान्तम् । ३ स्तात् क्रियापदम् । ४ ताम्रा प्रथमान्तम् 'ई' इत्यस्य विशेषणम् । ५ यम् द्वितीयान्तम्–य लक्षीकृत्य–इत्यर्थ । ६ न निषेधवाची । आयते न [२] किन्तु आयते एव–एवम् अस्य 'आयते' क्रियया अन्वय । ७ खम् द्वितीयान्तं क्रिया-

१ अत्र 'अङ्कुरा प्ररोहा' इति बहुवचनान्त पाठ विना' प्रदीपाङ्कुरा.' इति बहुवचनान्त. पाठ· कथ सङ्गतिमङ्गेत् [२]

विशेषणम् । ८ अण्ड+ला+क्विप्=अण्डला+ङि ( सप्तम्येकवचनप्रत्यये ) अण्डलि+ई=अण्डली । ९ 'ई' प्रथमान्तम् । १० प्रति+ऊह=प्रत्यूहम्—अव्ययीभावसमासे रूपम्। चित्रकाव्यत्वेन च अत्र 'प्रत्यूह' इति सानुस्वारमपि 'प्रत्यूह' इति अनुस्वाररहित गण्यम् । ११ श इति 'स' अर्थे । १२ ल+भ+प्लोष=लभप्लोष—सप्तम्येकवचने—लभप्लोषे । १३ दीप्र+दीपाङ्कुर—दीप्रदीपाङ्कुरा प्रथमैकवचनम्—स्त्रीलिङ्गे । १४ 'अयि' धातो आङ्पूर्वकस्य वर्त्तमानकाले क्रियापदम्- आ+अयते= आयते । ]

व्याख्या— "भवेत् एर्विष्णुः" [ ] इत्येकाक्षरवचनात् एर्विष्णुः तस्य सं० हे ए! विष्णो! त्वं वर्धमानो महिम्ना वर्धनशीलः । अथ वर्धो[1] वृद्धिं गच्छन् माया लक्ष्म्या आनो जीवितं यस्मात् स वर्धमानः स्तात्—भवतु—इति क्रियासम्बन्धः। त्वं किम्भूतः ? सिद्ध्यै प्रसिद्धः। पुनः कि० ? प्रत्यूहशः इत्यत्र श-सयोरैक्यात् सः । सः कः ? इत्याह--यं विष्णुम् ई लक्ष्मीः ताम्रा रक्ता अनुरक्ता सती खं सुखं यथा-स्यादेवं न आयते ? न आगच्छति ? अपि तु आयत एव। 'उहृ अर्दने' [ ५६१ ] "नाम्युपान्त्य०" [ ५ । १ । ५४ ] इति के ऊहः अर्दकः, उः शिवः, ऊहः अर्दको यस्य स ऊहः कामस्तं प्रति लक्षीकृत्य "लक्षणेनाभि-प्रत्याभिमुख्ये" [ ३ । १ । ३३ ] इत्यव्ययीभावे प्रत्यूहम् कामसुखार्थमित्यर्थः। कस्मिन् सति ? अण्डं लाति क्विपि अण्डलाः पक्षिणः तस्मिन् "लुगातोऽनाप" [ २ । १ । १०७ ] इति आलोपे अण्डलि पक्षिणि सति। किं० "ल इन्द्रे चलने च" [ ] इति एकाक्षरवचनात् लेन चलनेन भानि नक्षत्राणि प्लोषति—तिरस्करोतीति 'कर्मणो०" [ ५ । १ । ७२ ] अणि भप्लोषः तस्मिन् लभप्लोषे नक्षत्रेभ्योऽपि शीघ्रगामिन्य इत्यर्थः। एतेन सान्ध्यकालो लक्ष्यते। सान्ध्यकाले हि पक्षिणः इतस्ततो गच्छन्ति स्थित्यर्थम्। कामिन्योऽपि च स्वं स्वं भर्तारं प्रति विषयसुखार्थं गच्छन्ति इत्येवम् उक्तिः। ई किम्भूता ? दीप्रो दीपाङ्कुरः अर्थात् करे यस्याः सा दीप्रदीपाङ्कुरा। तत्र गच्छन्तीनां कामिनीनां प्रकाशहेतवे प्रदीपोऽपि भवतीत्येवंवर्णनम् ॥८७॥

इति वृत्तार्थपञ्चकेन विष्णुं व्यावर्ण्य, तमेव श्रीनेमिनाथशासने प्रसिद्धत्वेन भावितीर्थंकरपदत्वेन वा जैनरूपेण वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥८८॥
[ सिद्धये[1] वर्धमानः[2] स्तात्[3] ताऽऽम्रायन्नख[4]! म[5]ण्डली ।
प्रत्यूहशलभप्लोषे[6] दीप्रदीपाङ्कुराय[7]! ते[8] ॥८८॥ ]

[ १ सिद्धा+या=सिद्धय-सप्तम्येकवचने—सिद्धये । २ वर्धमान प्रथमान्तम् । ३ स्तात् क्रिया-पदम् । ४ ताऽऽम्र+अस्=ताम्रास्+अद्+नख=ताम्रायन्नख । संबोधनम् । ५ मण्डल+क्यन्+क्विप्=

१ 'अथवा वर्धो' इति पाठ सगत ।

मण्डली -प्रथमा-मण्डली। ६ प्रत्यूह+शलभ+प्लोषे=प्रत्यूहशलभप्लोषे सप्तम्यन्तम्। ७ दीप्रदीपाङ्कुर+क्यङ्+क्विप्=दीप्रदीपाङ्कुरा -प्रथमा। ८ अ! दीप्रदीपाङ्कुरा +अ=दीप्रदीपाङ्कुराय। ९ ते षष्ठी।]

व्याख्या--अ! विष्णो! ते तव सिद्धा-शाश्वती मुक्तिरूपा-या लक्ष्मीः यस्य स सिद्धयो जिन -प्रस्तावात्-श्रीनेमिनाथः तस्मिन् सिद्धये श्रीनेमिजिनविषये "वर्धमानो वीरजिने स्वस्तिकैरण्डविष्णुपु। शरावे प्रश्नभेदे च" [हैम० अने० स० चतुःस्वरकां० श्लो० १५६१-१५६२] इति अनेकार्थवचनात् वर्धमानः प्रश्नभेदः। प्रत्यूहाः प्रतिकूला ऊहाः सगया इति यावत्। त एव शलभाः पतङ्गास्तेषां प्लोषे दाहे दीप्रदीपाङ्कुरवदाचरतीति क्यङि, क्विपि, तल्लोपे दीप्रदीपाङ्कुरा स्तात्-भवतु-इति क्रियासम्बन्धः। हे ताम्रायन्नख! ता लक्ष्मी तस्यां विषये आम्रम् सहकारफलम् तद्वद् अतीवमधुररसप्रदत्वात् असन्ति शोभन्ते क्विपि ताम्रांसि अद् आश्चर्यकारीणि नखानि नखपदानि यस्य स ताम्रायन्नख तस्य सं०। तथा मण्डलानि देशान् इच्छति इति क्यनि "क्यनि" [४।३।११२] इति ईकारे क्विपि तल्लोपे "य्वो. प्वय्०" [४।४।१२१] इति यलोपे मण्डलीः त्रिखण्डाधिपत्वात् तस्य ॥८८॥

इति विष्णुं व्यावर्ण्य शिवं वर्णयति-तथाहि--

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।**
**प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥८९॥**

[सिद्धये[1] व[2]र्धमा[3] न[4]ः स्तात्[5] ताम्रा[6] यं[7] न[8] खमण्डली।
प्र[10]त्यूह[11]शलभप्लोपे [12]दीप्रदीपां कुरायते ॥८९॥]

[१ चतुर्थ्यन्तम्। २ व! संबोधनम्। ३ ऋद्ध+मास्=ऋद्धमा +न =ऋद्धमान। अत्र ऋद्धमा. प्रथमान्तम्। ४ न षष्ठी-न -अस्माकम्। ५ स्तात् क्रिया। ६ ताम्रा प्रथमा-'खमण्डली' इत्यस्य विशेषणम्। ७ यम् य प्रति इति यम् इति द्वितीयान्तम्। ८ न निषेधवाची। अस्य 'कुलायते' इत्यनेन अन्वय अर्थात् न कुलायते ? अपि तु कुलायते एव-कुरायते एव। ९ खमण्डली प्रथमान्तम्। १० प्रति 'यम्' इत्यनेन सह सवद्धम्। ११ ऊ+हस+ल+भ=ऊहशलभ। प्रति+ऊहशलभ=प्रत्यूहशलभ+प्लोषे तथा च इष्ट पद सिद्धम्। १२ दीप्रदीपा प्रथमा-खमण्डली इत्यस्य विशेषणम्। दीप्रदीपा=दीप्रदीपा। १३ कुल-क्यङ्+ते=कुलायते=कुरायते।]

व्याख्या--"वो महेश्वरे" [ ] इत्येकाक्षरवचनात् वो महेश्वर तस्य स० हे व! ईश्वर! स त्वं न सिद्धये स्तात्-भव-इति सम्बन्ध। त्वं किं० ऋद्धः समृद्धो माश्चन्द्रोऽर्थात् शिरसि यस्य स ऋद्धमाः। अत्र 'मास्' इति शब्द। स कः? इत्याह--यं शिवं प्रति लक्षीकृत्य खमण्डली रविपङ्क्तिर्द्वादशसूर्या--इत्यर्थ-- र-लयोरैक्यात् -- कुलं शरीरं तद्वद् आचरतीति क्यङ् इति न कुलायते? न शरीरायते? अपि तु कुलायते एव।

"क्षिति-जल-पवन-हुताशन-यजमाना-ऽऽकाश-सूर्य-सोमाख्या।
ईशस्य मूर्तयोऽष्टौ, चिरन्तनैर्मुनिभिराख्याताः॥" [ ]

इति वचनात् । खमण्डली कि० ताम्रा रक्ता । पुनः कि० दीप्रो दीप्यमानः, दीपनं घञि दीपः—कान्तिः—यस्याः सा दीप्रदीपा । अनुस्वारलोपः श्लेषात् । कस्मिन् ? " अव रक्षण० ' [ ४८९ ] इति दीप्त्यर्थाद्" भ्यादिभ्यो वा " [ ५ । ३ । ११५ ] इति क्विपि " मव्यवि० " [ ४ । १ । १०९ ] इत्यूटि ऊः कान्तिस्तस्याः—श सयोरैक्यात्—हसो हास्यं चाकचिक्यमिति यावत् तं लान्ति " आतो डः० " [ ५ । १ । ७६ ] इति डे ऊहशलानि यानि भानि नक्षत्राणि प्लोषे दाहे तिरस्करणे इत्यर्थः ॥८९॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥९०॥
[ सि[1]द्धयेवर्धमानः स्तात्[2] ताम्[3] रायन्[4] नः[5] ख[6]मण्डली ।
प्रत्यूहशल्[7] अ[8]भप्लोषेदी प्रदीपां[9] कुरा[10] यते[11] ॥९०॥ ]

१ [ सित्+णिच्+क्विप्=सित्+हय+ई+वर्धमान —सिद्धये वर्धमान प्रथमान्तम् । २ स्तात् क्रियापदम् । ३ ताम् द्वितीयान्तम् । ४ रायन् प्रथमान्तम् । ५ न षष्ठी । ६ खमण्डली प्रथमान्तम् । ७ प्रति+उ=प्रत्यु+ऊह+प्रत्यूह+शल्क+णिच्+क्विप्=प्रत्यूहशल्—प्रथमा । ८ अ+भू=अभ+प्लोषे+इन्द+णिन्=अभप्लोषेन्दी=अभप्लोषेदी—प्रथमा । ९ प्रदीप्+आम्=प्रदीपाम् षष्ठी । १० कु+र+अस्=कुरा । ११ यते सप्तम्येकवचनम् । ]

व्याख्या—कुत्सितं रं कामम् अस्यतीति क्विपि कुराः शिवः, नः अस्माकम्, लक्ष्मीम् रायन् कथयन् स्तात्-भवतु-इति क्रियासम्बन्धः । किं० सितं श्वेतं कुर्वन्तीति णिजि क्विपि सितो धावल्यकृतः हयाः अश्वाः यस्य स सिद्धयश्चन्द्रः । तेन हेतुभूतेन या ई शोभा तया वर्धमानो वर्धनशीलः । पुनः कि० खस्य सूर्यस्य मण्डलं खमण्डलं विद्यते यस्य मूर्तितयेति " अतोऽनेकस्वरात् " [ ७ । २ । ६ ] इनि खमण्डली । पुनः किं० उं शिवं प्रति प्रत्यूहो विचारो यस्य स प्रत्यूहः शिव—भक्तो जनः तस्य शल्कं शरणं करोतीति णिजि क्विपि तल्लोपे सौ " पदस्य " [ २ । १ । ८९ ] इति कलोपे प्रत्यूहशल् । पुन. किं० अः कृष्णः तस्माद् भवतीति " क्वचित् " [ ५ । १ । १७१ ] डे अभः कामस्तस्य प्लोषो दाहः तस्मिन् । ' इदु परमैश्वर्ये ' [ ६०९ ] इत्यत इन्दतीति णिनि अभप्लोषेन्दी । अनुस्वाराभावो न दोषाय । नः कि० प्रदीप्यामहे इति क्विपि प्रदीपस्तेषां प्रदीपां दीप्यमानानाम्, कस्मिन् ? यते जितेन्द्रियलोके ॥९०॥

इत्थम् अर्थद्वयेन शिवं व्यावर्ण्य तत्प्रेयसीं पार्वतीं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥९१॥
[ सिद्धये ! वर्ध ! मानस्ताऽत्ताऽम्रा ! यन्नखमन् ! डली ! ॥
प्रत्यूहशलभप्लोषे ! दीप्रं दीपाङ्कुरायते ॥९१॥ ]

[ १ सिद्ध+या=सिद्धय+आ=सिद्धया । सबोधने सिद्धये ! । २ उ+अर्ध=वर्ध ! संबोधनम् । ३ मनस्ताल=मनस्+त=मनस्त+( तद्धितीय ) अण्=मानस्त+अत्+ता=मानस्ताऽत्ता+अम्ला+क्विप्=अम्ला=मानस्ताऽत्ताऽम्ला=मानस्ताऽत्ताऽम्रा ! संबोधनम् । ४ यत्+न=यन्न । ख+मङ्ग=खमन् । अनयो पदयो समासे यन्नखमन् ! । ५ लड+इ+लडि=डलि+ई=डली ! संबोधनम् । ६ प्रत्यूह+शलभ+प्लुष्+अण्=प्रत्यूहशलभप्लोषा-सबोधने-० प्लोषे ! ७ दीप्र-दीप्रनाम्न आचारक्विपि पञ्चम्या द्वितीयपुरुषैकवचने क्रियापदम् । ८ दीपाङ्कुरायते-पञ्चम्यन्त नामरूपम्-दीपाङ्कुरायते ।

व्याख्या—सिद्धा शाश्वती निरुपाधिका या ईः लक्ष्मीर्यस्याः सा सिद्धया तस्य स० हे सिद्धये ! हे वर्ध ! उः शिवः तस्य अर्धम् समोऽशः तस्य सं० । अत्र "अदेतः स्यमोर्लुक्" [ १ । ४ । ४४ ] इति लुक् । तथा हे मानस्ताऽत्ताम्लाः ! "तस्याः सिंहो मनस्तालः" [ हैम० अभि० देवका० श्लो० २०५ ] इति मालावचनात् मनस्तालः पार्वत्याः सिंहः तस्य "ते लुग् वा" [ ३ । २ । १०८ ] इत्युत्तरपदलोपात् मनाः पार्वतीसिंहः तस्य यन् गच्छन् नो बन्धः स्खलनरूपो यस्मिन् तद् यन्न—स्खलनरहितं यथा स्यात् तथा । खे आकाशे मङ्गति स्वशक्त्या गच्छतीति क्विपि सौ "पदस्य" [ २ । १ । ८९ ] इति गलोपे यन्नखमन् । "तस्तस्करे क्रोड-पुच्छयोः" [ ] इति एकाक्षरवचनात् तः पुच्छम् क्रोडः— लक्षणया पृष्ठम् मनः तत्र भवा भवेऽणि मानस्ती या—'अत सातत्यगमने' क्विपि भावे तलि—अत्ता मतिः तया न म्लायसीति क्विपि मानस्तात्ताऽम्लाः, तस्याः सं० । तथा हे यन्नखमन् । तथा हे डली !'लड विलासे' [ २५४ ] "इ-कि-श्तिव्०" [ ५ । ३ । १३८ ] इति 'इ' प्रत्यये ड-लयोरैक्याद् व्यत्यये डलिर्विलास तम् ईयसे श्रयसीति क्विपि हे डलीः । तथा हे प्रत्यूहशलभप्लोषे ! प्रतिकूलः स्ववाहनसिंहविषये प्रतीपः ऊहः—मनोऽभिप्रायः—यस्य स प्रत्यूहो यः शरभः शार्दूलः तं प्लोषसि हंसीति "कर्मणोऽण्" [ ५ । १ । ७२ ] इत्यणि प्रत्यूहशलभप्लोषा तस्याः सं० । पार्वत्या वाहनं सिंहः, तस्य शार्दूलो हन्ता इति पार्वत्याः शरभहननवर्णनम् । हे पार्वति ! त्वं दीपाङ्कुरायतेः कान्तिप्ररोहविस्ताराद् "गम्ययपः०" [ २ । २ । ७४ ] इति पञ्चम्यां कान्तिविस्तारं प्राप्येत्यर्थः— दीप्र दीपं सुवर्णादि तद्वदाचर-इत्यर्थः ॥९१॥

१ अत्र 'मनस्त तत्र' इति पाठ उचित. ।

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥९२॥
[¹सिद्धये ²वर्धमा ³नः ⁴स्तात् ⁵ताम्रायऽऽन्नखमण्डली ।
⁶प्रत्यूहशलभप्लोषे ⁷दीप्रदीपां ⁸कुरायते ॥९२॥]

[१ चतुर्थ्यन्तम् । २ उ+अर्ध+मा=वर्धमा प्रथमान्तम् । ३ न षष्ठी । ४ स्तात् क्रियापदम् । ५ आयत्ति+णिच्+क्विप्=आयत् । ताम्र+आयत्=ताम्राऽऽयत्+नखमण्डली+ई=ताम्राऽऽयन्नखमण्डली =ताम्राऽऽयन्नखमण्डली प्रथमान्तम् । ६ शरभू+णिच्+शरभ । 'प्रत्यूह' पद प्रतिक्षणवाचकम् । प्रत्यूहशलभप्लोषा–प्रथमान्तम्–अत्र 'प्लोष' पद स्नेहवाचकम् । ७ ईदीप्रदीपा प्रथमान्तम् । ८ कुल+आयत+इ=कुलायते –प्रथमान्तम्–कुरायते । ]

व्याख्या—उकारः अर्धम् अंशो यस्य स वर्धः ईदृशो 'मा' इति वर्णो नास्ति यस्याः सा वर्धमा एतावता उमा पार्वती नः अस्माकम् सिद्धये स्तात्–भवतु–इति क्रियासम्बन्ध. । किं० "आयत्तिर्वासरे स्नेहे वशित्वे स्थाम्नि सीम्नि वा" [ हैम० अने० सं० त्रिस्व० कां० श्लो० ८४७ ] इति अनेकार्थवचनात् आयत्ति वासरं करोतीति णिजि क्विपि तल्लोपे "पदस्य" [ २ । १ । ८९ ] इति तलोपे आयत् सूर्य ताम्रो रक्तश्चासौ आयच्च ताम्रायत् प्राभातिकरविः तत्सदृशी या नखमण्डली नखश्रेणि ताम् ईयसे श्रयसीति क्विपि ताम्रायन्नखमण्डलीः । पुनः किं० प्रत्यूहशलभप्लोषा ऊहं ऊहं प्रति प्रत्यूहं प्रतिक्षणम्, शरभुवम् स्कन्दम्–आख्यातीति णिजि ¹अन्त्यस्वरादिलोपेऽचि प्रत्यूहशरभः ईदृशः । 'प्लुषूश् स्नेहन०' [ १५६२ ] इति घञि प्लोषः स्नेहो यस्याः सा प्रत्यूहशलभप्लोषा । पुनः किं० अस्य विष्णोर्भार्या ई लक्ष्मीः–कृष्णभार्या सत्यभामाप्रमुखा तद्वद् दीप्रो दीप्यमानो दीपः–कान्तिर्यस्याः सा ईप्रदीपा ²श्लेषाद् अनुस्वाराभावः । पुनः किं० कुलं शरीरं तस्मिन्नायतो विस्तीर्णः इः कामो यस्याः सा कुलायते ॥९२॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥९३॥
[ ¹सिद्धये ²वर्धमा ³नः ⁴स्तात् ⁵ताम्रा⁶यन्⁷नखमण्डली⁸ ।
⁹प्रत्यूहशलभप्लोषेद् ! ई¹⁰प्रदीपाङ्कु¹¹रा यते¹² ॥९३॥]

[ १ चतुर्थ्यन्तम् । २ उ+अर्ध+मा+वर्धमा प्रथमान्तम् । ३ षष्ठी । ४ क्रियापदम् । ५ ताम्र+अस्=ताम्रास=ताम्रा प्रथमान्तम् । ६ अत्–प्रथमान्तम्–अय्+क्विप्=अत् । ताम्रास+अत्=ताम्रायत् । ७ नख-मम् द्वितीयान्तम् । ८ ड+ली=डली प्रथमान्तम् । ९ प्रति+ऊ+ह+शल्क=प्रत्यूहशल्क+ अवी+णिच्+विच्=प्रत्यूहशलव्+ भ=प्रत्यूहशलभ+प्र+उषा=प्रोषा= प्लोषा-प्रत्यूहशलभप्रोषा+

१ हैम सूत्रम्–७ । ४ । ४३ । २ अत्र 'ईदीप्रदीपा' इत्येष पाठ समुचित, त पाठं विना 'प्रत्यूहशलभप्लोषेदीप्रदीपा' इति न स्यात् ।

इन्धू+क्विप्=प्रत्यूहशलभप्लोपेत् । १० ईप्–प्रथमान्तम्–ईप्+रदि+ई+पा+क्विप् ईप्रदी=पा+आम्=ईप्रदीपाम् षष्ठीबहुवचनम्। ११ कु+रा+क्विप्=कुरा । १२ यते षष्ठ्यन्तम् । ]

व्याख्या—डं शिवम्–निजप्राणेशम्–डीयते आलिङ्गतीति क्विपि डली. पार्वती नः सिद्धये स्यात्–भवतु–इति क्रियासम्बन्धः । किं० उः शिवः, तस्यार्धे समेंऽशे, मातीति क्विपि वर्धमाः । पुनः किं० ' ताम्राक्षः कोकिलः पिकः " [ हैम० अभि० तिर्यक्कां० श्लो० १३२१ ] इति मालावचनात् " ते लुग् वा " [ ३ । २ । १०८ ] इति उत्तरपदलोपात् ताम्रः पिक तद्वस [ तद्वद् अ ]सति शोभ ते क्विपि–मधुरभाषया-ताम्राः । पुनः किं० ' अयि गतौ ' [ ७९० ] अयते क्विपि " य्वो प्वय्० " [ ४ । ४ । १२१ ] इति यलोपे, "ह्रस्वस्य तः पित्कृति " [ ४ । ४ । ११३ ] इति तोऽन्ते अत् । अत् यात्री । कथम् ? प्रति लक्षीकृत्य, कम् ? नखमम् जात्यामेकवचने नख एव मश्चन्द्र. तम्–चन्द्रसदृशान् नखान्–श्रयन्तीत्यर्थः । पुनः किं० अवति श्रितान् इति क्विपि ऊ श्रितपालको यो ह. शिवः तमेव शल्कं शरणम् आख्यान्ति णिजि क्विपि प्रत्यूहशल्काः शिवभक्ताः, त एव " अवी. प्रकाशः आदित्यः भूमिः पशुः " [ उणादिसूत्र–७११ ] इत्युणादिवचनाद् अवीः प्रकाशस्तं कुर्वन्तीति णिजि क्विपि वस्योट् स्यादिति विचि अवि प्रकाशकारीणि यानि भानि नक्षत्राणि तेषु प्रकृष्टा उषा रात्रिस्तद्वत् इन्धे दीप्यते क्विपि प्रत्यूहशलभप्लोपेत् अत्र " व्योः " [ १ । ३ । २३ ] इति वलोपः । " पदस्य " [ २ । १ । ८९ ] इति कलोप । पुनः किं० ईप्सतीति क्विपि " पदस्य" [ २ । १ । ८९ ] इति सलोपे ईप् इच्छुः, केषाम् ? रदिनो हस्तिनः तेषाम् ई शोभा ताम् । 'पै शोषणे ' [ ४७ ] पायन्ति शोषयन्ति त्रिवपि रदीपाः सिंहा –पार्वत्या पूज्यत्वेन तदाश्रिततया तद्वाहनस्यापि पूज्यत्वाद् बहुवचने मनस्तालाः तेषां रदीपाम् । पुनः किं० कुं पृथ्वीं राति ददातीति क्विपि कुराः पृथ्वीदात्री । कस्य ? यते कस्यचित् तपस्विनः तदाराधकस्येत्यर्थः ॥९३॥

इत्यर्थत्रयेण पार्वतीं व्यावर्ण्य सूर्यं वर्णयति–तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥९४॥
['सिद्धये वर्धमानः स्तात् ताम्राऽऽयैन्न ! खं ! मण्डली ।
प्रत्यूहशलभप्लोपे दीप्रदीपा[10]ङ्कुरायै ते[12] ॥९४॥ ]

---

१ " अवी प्रकाश. आदित्य भूमि पशु राजा स्त्री च " इत्येवं तत्र निर्देश । २ 'अव्' शब्दस्य नपुंसकलिङ्गे प्रथमाया बहुवचनम् । ३ 'अव्' शब्दस्य वलोप । ४ ' शल्क ' शब्दस्य कलोप ।

[ १ चतुर्थी । २ शरावचाची प्रथमान्तम् । ३ क्रियापदम् । ४ प्रथमान्तम् 'मण्डली' इत्यस्य विशेषणम् । ५ ऐ+अत्=आयत्+न=आयन्न । आयन्न! — सबोधनम् 'ख' इत्यस्य विशेषणम्। ६ ख! संबोधनम् । ७ प्रथमान्तम् । 'दीप्रदीपा मण्डली' इत्यन्वय । ८ प्रति+ऊ+हस+लभ=ग्लोप=प्रत्यूहशलभप्लोषे सप्तम्या एकवचमम् । ९ षष्ठीबहुवचनम्–दीप्रदीप्+आम्=दीप्रदीपाम् । १० कुरा –कु+र+क्यङ्+क्विप्=कुरास्+अ=कुराय । ११ अ-निषेधवाची । ताम्रा न? किन्तु ताम्रा एव। १२ ते-तव षष्ठी।]

व्याख्या—हे ख! सूर्य! तथा हे आयन्न! ऐः शिवः तम् अतति सततं गच्छति क्विपि आयत् । नः बन्ध शरीरं यस्य स आयन्नः तस्य सं०, रवेः शिवमूर्तित्वात् । त्वं सिद्धये स्तात्–भव-इति क्रियासम्बन्धः । त्वं किं० वर्धमान इव शराव इव वर्धमानः शरावसमत्वात् सूर्यस्य। त्वं किं० स । स कः? इत्याह—यस्य ते तव दीप्रदीपाम् दीप्यमानभासाम् मण्डली श्रेणी प्रत्यूहशलभप्लोषे प्रतिपूर्वाद् अवे कान्त्यर्थाद् भावे क्विपि प्रत्यूः कान्तिः, तस्या हसः प्रकाश, तं लान्ति "आतो ड०" [५।१।७६] इति डे प्रत्यूहशलानि यानि भानि नक्षत्राणि तेषां प्लोषेऽभिभवे, 'अ' इति निषेधे ताम्रा न रक्ता? अपि तु ताम्रा एव–योऽभिभवितुं यमिच्छति स तं प्रति कोपाध्मातत्वात् ताम्रो भवत्येव। कि० मं० कौ पृथिव्यां विषये "रस्तीक्ष्णे वैश्वानरे" [ ] इत्येकाक्षरात्–रो वन्हिः स इवाचरतीति क्यङि क्विपि, तल्लोपे "अत" [४।३।८२] इत्यल्लोपे "य्वो प्वय्०" [४।४।१२१] इति यलोपे कुराः पश्चाद् अग्रेतनेसो[१] रुत्वे अकारेण रोर्यत्वे संहितायां सिद्धम् । ९४॥

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥९५॥**
**[ सिद्धये वर्धमानः स्तात् ताम्रायन्न ! ख ! मण्डली ।**
**प्रत्यूह ! शलभप्लोषेदीप्रदीपाङ्कुरायते ॥९५॥ ]**

[१ चतुर्थी । २ ऊ+अर्ध+मा+नस्=वर्धमान प्रथमैकवचनम् । ३ क्रियापदम् । ४ ताम्र+अस्=ताम्रास् । ५ ई+अन्न=यन्न । ताम्रास्+यन्न=ताम्रायन्न ! संबोधनम् । ६ मण्डल+इन्=मण्डली प्रथमा । ७ प्र+ति+ऊ+हा+ड=प्रत्यूह । सबोधने प्रत्यूह ! । ८ शर+भ+प्र+उषा+(इ+दा+क्विप्) इदी । शलभप्रोषेदी+ई+प्रदीप=शलभप्रोषेदीप्रदीप+अङ्कुर+आयति=शलभप्रोषेदीप्रदीपाङ्कुरायति, अस्य षष्ठ्येकवचने ०रायते ।]

व्याख्या—हे ताम्रायन्न! ताम्रम् धातुभेदम्–रक्तवर्णत्वात् कान्त्या–अस्यति क्विपि ताम्रा । तथा ई पृथ्वी तस्याम् अन्नं धान्यं यस्मात् स यन्न । लोके हि "सूर्यो वै वर्षति" [ ] इत्युक्ति । यदुक्तं रघौ—

"सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः" । [रघुवं० स० १ श्लो० १८] इति । पश्चाद् विशेषणसमासे ताम्रायन्न तस्य सं० । तथा हे प्रत्यूह! प्रकर्षेण तीनां

१ अग्रेतनसकारस्य ।

चौरपुत्राणाम् ऊर्भवः—सत्ता—तं जहासीति—त्यजसीति "आतो डः०" [५ । १ । ७६] इति डे प्रत्यूह तस्य सं० । हे ख ! सूर्य ! त्वं शलभप्लोपे दीप्रदीपाङ्कुरायतेः—र-लयोरैक्यात्—शर जलम्, भानि नक्षत्राणि, प्रकृष्टा उषा रात्रि', तथा ई कामम्, 'दैङ् पालने' [६०४] दयते पालयतीति क्विपि परमते ईकारे इदीर्घ' प्रदीप' ई लक्ष्मी'-कान्ति'—तया—दीप्रो दीपनशीलो दीप' प्रदीपो वा । तथा अङ्कुरा नवीनोद्गतलताप्ररोहा तेषाम् आयतिर्विस्तार', तस्या' सिद्धये । 'षिधू गत्याम्' [३२०] क्तौ सिद्धिर्गतिर्विनाश इति यावत् । तस्मै स्तात् । सूर्योद्गमे हि जलं शुष्यति । भानि, उषाऽपि, प्रदीपोऽपि, अङ्कुरा अपि च क्षयन्तीति एवंवर्णनम् । त्वं किं० ? मण्डलं बिम्ब विद्यते यस्य "अतोऽनेकस्वरात्" [७ । २ । ६] इनि मण्डली । पुन' किं० ? ऊ. कान्ति—तथा . अर्धो हीन'—अर्थात् सूर्यात्—इति वर्धो यो माश्चन्द्रः, तस्मिन् नससे प्रतिकूलीभवसीति क्विपि वर्धमान. । अत्र "अम्वादेः०" [१ । ४ । ९०] इति म्वादिवर्जनाद् दीर्घाभाव' ॥९५॥

इति अर्थद्वयेन सूर्यं वर्णयित्वा अथ चन्द्रमसं वर्णयति—तथाहि—

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥९६॥**
**[ [1]सिद्धये ! [2]वर्धमा ! [3]नस्तात् ! [4]ताम्राऽऽयन्[5]न [6]खमण्डली ।**
**[7]प्रत्यूहशल[8]भप्लोषे दीप्रदीपाङ्कुराय [9]ते[10] ॥९६॥ ]**

[१ सित्+हय+ई=सिद्धये ! संबोधनम् । २ ऊ+अर्ध+मास्=वर्धमा. ! संबोधनम् । ३ नस्+क्विप्=नस्+ता+अत्=नस्तात् ! सबोधनम् । ४ ताम्र ! संबोधनम् । ५ इधातो भौवादिकस्य ह्यस्तन्या तृतीयपुरुषैकवचने 'आयन्' इति क्रियापदम् । न आयत् ? अपि तु आयत् एव इति भावार्थ । ताम्र+आयत्+न=ताम्रायन्न । ६ प्रथमान्तम् । ७ प्रति+उ+उ+हस+ल=प्रत्यूहशल । ८ भ+प्लुष्+क्विच्+भप्लोट् । प्रत्यूहशल+भप्लोट् । अस्य चतुर्थ्या एकवचने प्रत्यूहशलभप्लोषे । ९ चतुर्थ्येकवचनम् । १० ते-तुभ्यम्-चतुर्थ्येकवचनम् । तुभ्यम् आयत्-आश्रिता इति अन्वय ।]

व्याख्या—हे सिद्धये ! सितं श्वेतं कुर्वन्तीति णिजि क्विपि तयोर्लोपे सितः धावल्यकारकाः—सिता एवेति यावत् । हया' अश्वा तै' ईयसे गच्छसीति क्विपि सिद्धये तस्य स० 'अदेत. स्यमोर्लुक्" [१ ।४।४४] इति लुकि सिद्धम् । तथा हे वर्धमा' ! ऊर्दीप्यमान, अर्धो मा मासो यस्य स वर्धमा', तस्य स० । तथा हे नस्तात् ! 'णसि कौटिल्ये' [८५१] क्विपि भावे तलि नस्ता कौटिल्यं तद् अतसि आश्रयसीति क्विपि नस्तात् तस्य सं० । तथा हे ताम्र ! रक्त ! एतेनोदयकालो व्यज्यते—उदित्वर एव

चन्द्रस्ताम्रो भवतीति । ते तुभ्यं खमण्डली नभोमण्डली न आयत् न आश्रिता[1] अपि त्वां श्रितैव । ननु चन्द्रो नभ आश्रयति, न तु चन्द्रं नभ, तत् कथं खमण्डली चन्द्रम् आश्रयति ? उच्यते, आश्रयणं हि सम्बन्धः स चोभयनिष्ठः, ततो यथा चन्द्रो नभ[2] श्रयति, तथा नभोऽपि चन्द्रं प्रति उक्तिर्युक्तैव । ते किं० दीप्रवत् अग्निवद् दीप्यन्ते इत्येवंशीलाः "नाम्युपान्त्य०" [५ । १ । ५४] इति के दीप्रदीपाः, अङ्कुराः नानाविधौषधीनां प्ररोहाः यस्मात् स दीप्रदीपाङ्कुरः तस्मै दीप्रदीपाङ्कुराय । पुन किं० उ शिवं प्रति लक्ष्यीकृत्य प्रत्यु या उ.—कान्तिः—तस्या हसो हास्यम्—प्रकाश इति यावत् । तं लातीति "आतो डः०" [५ । १ । ७६] इति डे प्रत्यूहशलः । तथा भानि नक्षत्राणि तेभ्यः पुष्णासि स्निह्यसीति विचि भप्लोट् तयोर्विशेषणसमासे चतुर्थ्यां प्रत्यूहशलभप्लोषे । चन्द्रस्य भानां पतित्वात् स्नेहकरणम् ॥९६॥

इति चन्द्रं वर्णयित्वा राजानं वर्णयति—तथाहि—

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥९७॥**
**[[1]सिद्धयेव[2]र्धमानः [3]स्तात् [4]ताम् [5]रायं [6]न [7]खमण्डली ।**
**[8]प्रत्यू[9]हशलभप्लोषे [10]दीप्रदीपाम् [11][12]कुरायते[13] ॥९७॥]**

[१ सित्+हय+इभ=सिद्धये+णिच्+क्विप्=सिद्धयेव्—प्रथमान्तम् । २ अर्द्+ह+मान=अर्धमान—प्रथमान्तम् । सिद्धयेव्+अर्धमान=सिद्धयेवर्धमान=सिद्धयेवर्धमान । ३ क्रियापदम् । ४ ताम् प्रसिद्धाम् लक्ष्मीरूपा वा इत्येवमर्थः स्पष्ट एव । ५ 'रै'शब्दस्य द्वितीयाया एकवचनम् । ६ निषेधवाची । ७ ख+मङ्ग=खमन्+ल+ली=खमण्डली । ८ प्रति—राय प्रति इति सवन्ध, अथवा प्रति प्रतिकूलार्थेऽपि । ९ ऊ+ऊह+ऊह+शर+भा=ऊहशरभा=ऊहशलभा तेषा प्लोषे—सप्तम्या एकवचनम् । १० दा+क्विप्=दी—प्रथमान्तम्—दाता । ११ द्वितीयान्तम्—'रायम्' इत्यस्य विशेषणम् । १२ कु+राज्+ड=कुरा—संबोधनैकवचनम् । कुर+अ+अस्=कुरास् । १३ कुरास्+अते=कुरायते=कुरायते ।]

व्याख्या—कु पृथ्वी तया राजते "क्वचित्" [५ । १ । १७१] डे कुरो राजा तस्य स० । त्वं ति. चौरापत्यम् न तिः अतिस्तस्य अते उत्तमनरस्य रायं द्रव्यं प्रत्याश्रित्य दीर्दाता स्तात्—भव—इति वाक्यम् । रायं किं० [१] ताम् प्रसिद्धाम् लक्ष्मीरूपाम् वा—अत्र विरामविवक्षया सन्ध्यभावे न मोऽनुस्वार । त्व किं० [२] अः कृष्णस्त-

---

१ अस्य प्रतिबिम्ब—फोटो—पुस्तके तु 'अपि त्वा श्रितैव' इति पाठ परन्तु सः 'अपि तु आश्रितैव' इत्येवमपि पठितुं शक्य । २ 'चन्द्र श्रयति' इत्येव चन्द्रं प्रति उक्ति ।

द्वत् प्रतापेन असि शोभसे क्विपि आः प्रतापेन कृष्णसमः इत्यर्थः । अत्र कुरशब्दाऽकारेण सन्धौ अग्रस्थे स्वरे "रोर्यः" [१। ३ । २६] इति यत्वे कुरायते इति सिद्धम् । त्वं किं० 'षिधू गत्याम्' [३२०] सेधतीति क्विपि सित् शीघ्रगामुकम् यत् हयाश्च इभाश्च "सेनाऽङ्ग–क्षुद्रजन्तूनाम्" [३ । १ । १३४] इति समाहारे हयेभम् तत् निज-सैन्यतया–आचष्टे इति णिजि क्विपि भस्य वत्वे सिद्धयेव् । पुन. किं अर्द'–अञ्जा–तं करोति णिजि क्विपि अर्त्तु याचकजन' तस्य द्वौ हस्तः तत्र मान पूजा यस्मात् स अर्धमान' । पुन किं० खे नभसि मङ्गन्ति गच्छन्ति क्विपि खमङ्गः पक्षिण', तान्–ड-लयोरैक्यात्–लाति गृह्णाति वधार्थम् "आतो डा०" [५ । १ । ७६] डे खमण्डो हिंस्रजनः तं लीयते– श्रयति इति क्विपि खमण्डलीः नो निषेधे, कथं ? नै–पापिजनसङ्गवर्जित इत्यर्थः । रायम् किं० ? प्रदीप्यते "नाम्युपान्त्य०" [५ । १ । ५४] इति के प्रदीपां दीप्यमानाम् । क्व विषये ? ऊहिंसा, तस्याम् ऊहो विचारो येषा ते ऊहा ईदृशा ये शरैर्वाणैर्भान्ति "आतो डः०" । [५ । १ । ७६] इति डे शरभाः सुभटाः ऊहाश्च ते शरभाश्च ऊह-शरभा प्रतिकूलाश्च ते ऊह-शरभाश्च प्रत्यूहशरभास्तेषां प्लोषे विनाशे--अयमर्थ -- निजप्रतिपक्षभूतसुभटविभेदे दीप्रामिति ॥९७॥

इति एकार्थेन राजानं व्यावर्ण्य प्रदीपं वर्णयति–तथाहि-—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥९८॥
[ सिद्धयेऽवर्धमानस्तैऽऽत्तैऽऽम्रायन्नखमण्डली ।
प्रत्यूह शलभं प्लोषेद्-ईप्रदीपाङ्कुरायं ते" ॥९८॥]

[१ सिद्ध+यत्–विशेषणसमासे प्रथमाबहुवचने सिद्धये । अत्र 'यत्' इति सर्वनाम । २ अव+ऋद्धम्+आन =अवर्धमान अत्र' अवर्धम्' क्रियाविशेषणम् । सिद्धये अवर्धमान =सिद्धयेऽवर्धमान । ३ आन प्रथमाबहुवचनम् 'अन्'शब्दस्य, 'दीपाङ्कुरा' इत्यस्य विशेषणम् । ४ स्त युष्मत्पुरुष-बहुवचनम् पञ्चम्याम् । ५ आत्ता+आम्ला =आत्ताऽऽम्ला प्रथमाबहुवचनम् । ६ अन्न+खमण्डली= अन्नखमण्डली द्वितीयाबहुवचनम् । आत्ताऽऽम्ला +अन्न०=आत्ताम्लायन्न० । स्त+आत्ताम्लायन्न= स्ताऽऽत्ताऽऽम्रायन्न० । ७ प्रत्यूह 'ऊह' धातो परोक्षाया बहुवचनम्-प्रत्यूह यूयम् । ८ द्विती-

१ कुर+अस्–कुरास्+अते–इति अवस्थायाम् 'कुरास्' इत्यस्य सस्य रुत्वे तत 'रोर्य' इति सूत्र प्रवर्तते । २ प्रतौ अय पाठ अस्पष्ट । नास्य 'अञ्जा'शब्दस्य भाव अत्र प्रतीयते । 'अर्द गतियाचनयो' [३०१] इति धातो याचनार्थं 'अर्द' शब्द संभवी । अत्र प्रस्तुतसदर्भानुसारेण'अर्द याञ्चा' इति पाठ अत्र भवितु योग्यः । 'अर्दो याञ्चा' इत्यस्य लेखकेन 'अर्दोऽञ्जा' इति लिखितं भवेत् इति कल्पना । ३ हिंस्रजन न श्रयति–पापिजनसङ्गवर्जित –इति भाव ।

यान्तम् एकवचनम् । ९ प्र+उपा+इन्ध्+=प्रोपेद्+ई+प्रदीपाङ्कुरा =प्रोपेदीप्रदीपाङ्कुरा =प्लोपेदीप्रदीपाङ्कुरा. । १० ०ङ्कुरा+अ=०ङ्कुराय । अ' वाक्यालकारे । ११ ते प्रथमाबहुवचनम । ]

व्याख्या—हे प्लोपेदीप्रदीपाङ्कुराः ! प्रकृष्टां प्रकर्षेण वा उषां रात्रिं इन्धयतीति क्विपि प्लोपेत् ईदृशा या ई लक्ष्मीस्तया युक्ताः प्रदीपाङ्कुराः प्रदीपाः—'अ' इति वाक्यालंकारे—ते प्रसिद्धा यूयम् [1]शीलभञ् जीत्येकवचने पतङ्गम् 'उहृ तुहृ दुहृ अर्दने' [५६१] परोक्षायुष्मदर्थबहुवचने--ऊह पीडयथ स्म इत्यर्थः । श्लेषादनुस्वाराभावः । ते के? इत्याह—सिद्धास्तज श्रिया प्रसिद्धाश्च ते, ये च सिद्धये यूयम् आत्ताः—स्वीकृताः आङ्पूर्वाद् "उपसर्गादात" [५ । ३ । ११०] इति अङि आम्ला—म्लानिर्याभिस्ता आत्ताम्लाः । ई पृथ्वी तस्या अन्नमिवान्नं जीवनं प्रकाशकत्वेन पृथिव्यास्तज्जीवनत्वात् एवंविधाः खमण्डल्यः सूर्यबिम्बानि ता अन्नखमण्डलीः प्रति लक्षीकृत्य अनन्ति जीवन्तीति क्विपि "अहन्-पञ्चम०" [४ । १ । १०७] इति दीर्घे आनो जीवन्तो निजतेजोरूपेण विद्यमानाः स्त—वर्त्तध्वम् । कथम् वो वातः, तस्य अभावोऽवम् वाताभावः—तेन ऋद्धं समृद्धं कान्तिमत्तया यथास्यादेवमित्यर्थः ॥९८॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥९९॥
[ [1]सिद्धये [2]वर्धमानः [3]स्तात् [4]ताम्रा[5]यन्नखमण्डली ।
[6]प्रत्यूहशलभप्लोषे ! [7]दीप्रदीपाङ्कुरायते ! ॥९९॥ ]

[ १ चतुर्थ्यन्तम् । २ प्रथमान्तम्– शरावबाचक पदम् । ३ क्रियापदम् । ४ ताम्र+अस्=ताम्रास्=ताम्रा । ५ यन्न+ख+मण्डल=यन्नखमण्डल+इन्=यन्नखमण्डली । ६ प्लोष्+अच्+आ=प्लोषा । प्रत्यूह+शलभ+प्लोषा=प्रत्यूहशलभप्लोषा । अस्य सबोधनम् प्रत्यूहशलभप्लोषे । ७ दीप्र+दीप+अङ्कुर+आयति=दीप्रदीपाङ्कुरायति अस्य सबोधनम् दीप्रदीपाङ्कुरायते ! । ]

व्याख्या हे दीप्रदीपाङ्कुरायते ! दीप्रा दीप्यमाना ये दीपाङ्कुरास्तेषामायतिर्विस्तारः श्रेणिरिति यावत् तस्याः सं० । तथा हे प्रत्यूहशलभप्लोषे प्रतिकूलो दीपे स्वर्णभ्रान्तिकरः ऊहो वितर्को येषां ते प्रत्यूहा ये शलभाः पतङ्गास्तान् प्लोषतीति अचि प्रत्यूहशलभप्लोषा तस्याः स० "एदाप" [ १ । ४ । ४२ ] इत्येवम् । वर्धमानः शरावः सिद्धये निष्पत्तये स्तात्—भवतु—युष्माकमेवेति सम्बन्धः । दीपा हि प्रायः शरावे एव क्रियन्ते । वर्धमानः किं० ताम्रो रक्तवर्णस्तेन असति शोभते क्विपि ताम्राः शरावो रक्त

१ अत्र 'शलभम्—जात्येकवचने—पतङ्गम्' इति पाठ साधु ।

एव वर्ण्यते । दीपसिद्धौ हेतुगर्भविशेषणमाह—यतः किं० गेयन् गच्छन् नकारो यस्मात् तत् यन्न च तत् नेखं च यन्नखम् एतावता अखम्—अशून्यम् तैलादिना भृतमित्यर्थः । मण्डलं वृत्ताकारं विद्यते यस्येति "अतोऽनेकस्वरात्" [ ७ । २ । ६ ] इतीनि यन्नखमण्डली ॥ ९९ ॥

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१००॥
[ सिद्धये वर्धमानः स्तात् ताम्रायन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्र ! दीपाङ्कुरायते ! ॥१००॥ ]

[ १ चतुर्थ्यन्तम् । २ वा + ऋद्ध + मान= वर्धमान प्रथमान्तम् एकवचनम् । ३ क्रियापदम् । ४ ताम्र + क्यङ् + क्विप् + स्=ताम्रास्=ताम्रा । ५ यद् + न= यन्न + ख + मण्डल + इन्=यन्नखमण्डली । ६ प्रति + ऊ + ऊह = प्रत्यूह + शलभ+ प्लोष=प्रत्यूहशलभप्लोष=प्रत्यूहशलभप्लोषे सप्तम्या एकवचनम् । ७ दीप्र ! + दीप + अङ्कुर ! + आय + ताय् + क्विप् = दीप्रदीपाङ्कुरायता – गोपावत् चतुर्थ्या एकवचनम् । अथवा ०अङ्कुर + अय + ना = अङ्कुरायता अस्य चतुर्थ्या एकवचने अङ्कुरायते, 'ता' इति पूर्ववत् साध्यम् ।]

व्याख्या—हे दीप्र ! देदीप्यमान ! हे दीपाङ्कुर !—प्रदीप ! त्वं सिद्धये स्तात्—भव इति । त्वं किं० ? ऋद्धो वृद्धो मानोऽहङ्कारो यस्य स ऋद्धमानः 'वा' इवार्थे ऋद्धमान इव साहङ्कार इव । कस्मिन् ? प्रत्यूहशलभप्लोषे ऊ कान्तिरर्थात् प्रदीपस्यैव तां प्रति आश्रित्य प्रत्यूः ईदृशः ऊहो हेमवितर्को येषां ते—प्रत्यूहाश्च ते शलभाश्च प्रत्यूहशलभास्तेषा प्लोपे दाहे त्वं किं० ताम्र इवाचरतीति ताम्राः प्रत्ययाद्यानयनं पूर्ववत् । पुन किं० ? अद्शब्दोऽद्भुते अद् अद्भुतकृत् यो नखस्तद्वत् रक्तं तेजस्वि च मण्डलम् आकारविशेषो विद्यते यस्य स अन्नखमण्डली । सिद्धये किं० ? अयः शुभकर्म, आयो वा लाभः 'इण्क् गतौ' [ १०७५ ] "युवर्ण वृ-द०" [ ५ । ३ । २८ ] इत्यलि, अयो ज्ञानं वा तं तायते रक्षतीति क्विपि चतुर्थ्याम् अयते, आयते वा ॥ १०० ॥

इति अर्थत्रयेण दीपं वर्णयित्वा तदुत्पत्तिनिमित्तम् अग्निं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥१०१॥
[ सिद्धये वर्धमानः स्तात् ताम्रायन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीप्र ! दीपाङ्कुराय तेः ॥१०१॥ ]

१ अत्र 'रायन्' स्थाने 'यन् ' इति पाठ साधु । २ अत्र 'नखम्' स्थाने 'खम्' इति पाठ. समुचित । 'नखम्' इति पाठे' यन्ननखम् इति भवेत् अनिष्टं चैतत् ।

[ १ चतुर्थ्यन्तम् । २ वर्धमान + णिच्+क्विप्= वर्धमान् षष्ठ्या एकवचने वर्धमान· । ३ स्तात् क्रियापदम् । ४ ताम्र + अस् = ताम्रास् = ताम्रा । ५ अन्न + खव् + विच् = अन्नखव् + मण्डली = अन्नखमण्डली । ताम्रा + अन्नख० = ताम्रायन्नख० । ६ मण्डली + क्यङ् + क्विप् = मण्डली प्रथमान्तम् । ७ प्र + तीव् = प्रत्यू + ह + शलभ = प्रत्यूहशलभ + प्लोषे = प्रत्यूहशलभप्लोषे सप्तम्या एकवचनम् । ८ दीप्र ! सबोधनम् । ९ दीपाम् षष्ठीबहुवचनम् । १० कु प्रथमैकवचनम् । दीपाम् + कु - दीपाङ्कु । ११ आयते. षष्ठ्या एकवचनम् । ]

व्याख्या—"अग्नौ वमिर्दीप्रः" [ १६६[१] अथवा १७११[१] ] इति शेषवचनात् हे अग्ने ! त्वं वर्धमानः वर्धमानं शरावम् उपलक्षणत्वाद् घटादि करोतीति णिजि क्विपि तल्लोपे वर्धमानिति नन्तप्रकृतेः षष्ठ्यां वर्धमानः कुम्भकारस्य सिद्धये घटादिनिष्पत्तये स्तात्—भव—इति क्रियासंबन्धः । त्वं किं० ताम्रं कान्त्या अस्यति क्षिपति क्विपि ताम्राः । पुनः किं० अन्नेन वायुना 'व(ख)वश् हेठश् भूतप्रादुर्भावे' [ १५४४, १५५६ ] इति खौनाति प्रादुर्भवतीति विचि व्यञ्जनकार्यस्यानित्यत्वात् "य्वोः प्वय्०" [ ४ । ४ १२१ ] इति वलोपाभावे, "व्योः" [ १ । ३ । २३ ] इति लोपे अन्नखम् । तथा पुनः किं० मण्डलं बिम्बं विद्यते यस्य स "अतोऽनेकस्वरात्" [ ७ । २ । ६ ] इति इनि मण्डली सूर्यः तद्वदाचरतीति "क्यङ्" [ ३ । ४ । २६ ] इति क्यङि क्विपि तल्लोपे मण्डलीः देदीप्यमानत्वात् । पुन· किं० कुः स्थानं दीपां कान्तीनाम् । पुनः किं० प्रकर्षेण तीवन्तीति पुष्टीभवन्तीति क्विपि वस्योटि प्रत्यूनि पुष्टानि हानि दारूणि तथा शलभाः पतङ्गाः तेषां प्लोषे विनाशे कर्तव्ये आयता विस्तृता ईर्लक्ष्मीः कान्तिर्यस्य स आयतेः, अनित्यत्वात् कजभावः ॥ १०१ ॥

इति अग्निं वर्णयित्वा कामं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥ १०२ ॥

[ [१]सिद्धये [२]वर्धमानः [३]स्तात् [४]ताम्र[५]ऽयं [६]नखमण्डलीः ।
[७]प्रत्यूहशलभ ! [८]प्रोषे [९]दीप्रदीपाङ्कुरायते[१०]ः ॥ १०२ ॥ ]

[ १ चतुर्थ्यन्तम् । २ व + ऋद्ध + मान = वर्धमान प्रथमान्तम् । ३ स्तात् क्रियापदम् । ४ ताम्र ! सबोधनम् । ५ अयम् प्रथमान्तम् । ६ नखमण्डल + क्यन् + क्विप्=नख-

१ निर्णयसागरमुद्रितायाम् 'अभिधानचिन्तामणिपरिशिष्ट' अपरनामधेयाया शेषनाममालाया १६६ श्लोके अयं शब्द "अग्नौ वमिर्दीप्र" इत्यस्मिन् पद्ये दर्शित । पुनश्च अयमेव शब्द. देवचन्द्रलालभाइग्रन्थसंग्रहे प्रकाशितस्य अभिधानचिन्तामणिकोशस्य प्रथमत अनवच्छिन्नतया अङ्कगणने १७११ संख्यके पद्ये । २ 'तीव स्थौल्ये' धातु भ्वादिगणे ४६९ ।

मण्डली प्रथमान्तम् । ७ प्रति + ऊ + ऊह=प्रत्यूह–शर+भा=प्रत्यूहशरभ=प्रत्यूहशलभ ! संबोधनम् । ८ प्र + उषा + इन्धू + क्विप् = प्रोषेत् + ई + प्रदीप + अङ्कुर + अस् प्रोषेदीप्रदीपाङ्कुरा. – प्लोषेदीप्रदीपाङ्कुरा. प्रथमान्तम् । ९ अ + ति = अति = अतेः षष्ठ्यन्तम् । ० पाङ्कुरा अते. = ० पाङ्कुरायते = ० पाङ्कुरायते ।]

व्याख्या–हे प्रत्यूहशलभ ! प्रतिकूल· ऊः ईश्वरे ऊहो वितर्को यस्य स प्रत्यूहः, ईदृशो य· शरैः पुष्पमयैर्बाणैर्भातीति "क्वचित्" [ ५ । १ । १७१ ] डे प्रत्यूहशरभः कामस्तस्य स० । हे ताम्र ! गौरवर्णत्वाद् रक्तस्तस्य स० । त्वम् न विद्यते तिर्ज्ञानं यस्य स तस्य अतेः अज्ञानस्य विषयविषपानेच्छाच्छादितहार्दज्ञानस्य कस्यचित् पुंसः सिद्धये विषयसुखाभिलाषपूर्तये स्तादिति सबन्धः । त्वं कि० वो महेश्वरः तस्मिन् निजवैरित्वाद् ऋद्धो मानोऽहङ्कारो यस्य स वर्धमानः । त्वं किं० अयं प्रत्यक्षः । पुनः किं० नखा नखक्षतानि तेषां मण्डलं समूह· नखमण्डलं तत् स्त्रीणां वक्षःस्थलादौ करोतीति णिजि अचि नखमण्डलः कामिजन· । तमिच्छसीति [1]क्यङि क्विपि अल्लोपे यलोपे नखमण्डली· । पुनः किं० प्रकर्षेणोषायां रात्रौ इन्धे दीप्यते क्विपि प्रोषेत् । पुन. किं० ई लक्ष्मीः, प्रदीपो दीप·, अङ्कुरा नवोद्गतसहकारादितरुप्ररोहास्तेषां द्वन्द्वे ईप्रदीपाङ्कुरास्तैः असरिस दीप्यसे क्विपि ईप्रदीपाङ्कुराः । लक्ष्म्याः, प्रदीपेन, अङ्कुरैश्च कामः प्रदीप्यते इत्येवमुक्ति. ॥ १०२ ॥

इति कामं वर्णयित्वा तद्दीपनहेतुं पिकं वर्णयति–तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥ १०३ ॥
[ [1]सिद्धये [2]वर्धमा [3]नस्ताऽऽत्ताऽऽम्रा[4]यन्नखमण्डलीः ।
[5]प्रत्यू–हशलभप्लोषेद् [6]ईप्रदीपाङ्कुरा [7]यते ॥ १०३ ॥]

[ १ सित् + हय – सप्तम्या एकवचने – सिद्धये । २ ऊ + अर्द + णिच् + अच् वर्ध + मानु = णिच् + क्विप् = वर्धमाय् । अत्र 'वर्धमाय् इति प्रथमान्तम् । वर्धमाय् + नस्ता० = वर्धमानस्ता० । ३ नस् + ता = नस्ता + आत्त + आम्र + अस् = नस्ताऽऽत्ताऽऽम्रा + अन्न – ताम्रायन्न० । ४ अन्न + खाद् + ड = अन्नख + मण्ड + ली = अन्नखमण्डली प्रथमान्तम् । ५ प्रति = अव् + क्विप् = प्रत्यू = ह = प्रत्यूह+ शर + भा = शरभ । प्लोष + इन्धू = प्लोषेत् । प्रत्यूह + शरभ + प्लोषेत् = प्रत्यूहशरभप्लोषेत् । अत्र 'प्लोष शब्द स्नेहवाची । ६ प्र + दा = प्रदा । ई + प्रदा = ईप्रदा सप्तम्येकवचने ईप्रदि । ईप्रदि+दीपाङ्कुरा =ईप्रदीपाङ्कुराः । ० प्लोषेत्+ईप्रदी० प्लोषेदीप्रदी० । ८ यते सप्तम्या एकवचने ।]

---

१ अत्र 'क्यनि' इति उचितम् अन्यथा 'मण्डली' इति न स्यात् ।

व्याख्या–इकारेण युक्तः प् पकारो यस्य स इप्। तथा अकारम् अञ्चतीति श्रयतीति क्विपि आङ् ईदृशः क् ककारः उरः अग्रे यस्य स आङ्कुराः इप् चासौ आङ्कुराश्च इपाङ्कुराः अस्ति। अत्र "घुटस्तृतीयः" [ २ । १ । ७६ ] इति प-कोर्वत्व-गत्वे न भवतः, संज्ञाशब्दत्वेन–यथा'अज्स्याम्' कृते तु सन्देहः स्यात् न ज्ञायते पकारो बकारो वेति–एतावता कोऽस्तीत्यर्थः। पिकः कीदृग् ? नस्तात्ताम्रा यन्नखमण्डली नस्ता कौटिल्यं तया आत्तो गृहीतो य आम्रः सहकारः तस्मिन् असति शोभते क्विपि नस्तात्ताम्राः। यन् अन्नं भोजनं आम्रफललक्षणं तत् खादतीति "क्वचित्" [ ५ । १ । १७१ ] डे नस्तात्ताम्रायन्नखः सहकारफलास्वादक इत्यर्थः। तथा "मण्डो मस्तुनि भूषायामेरण्डे सार-पिच्छयोः" [ हेम० अने० स० द्विस्वरकां० श्लो० १४० ] इत्यनेकार्थवचनात् मण्डः पिच्छम् लीयते श्लिष्यतीति क्विपि मण्डलीः, तयोर्विशेषणसमासे नस्तात्ताम्रायन्नखमण्डलीः। पुनः किं० प्रतिपूर्वाद् अवतेर्दहनार्थात् क्विपि प्रत्यूर्दाहको हः शिवो यस्य स प्रत्यूहः कामः स एव शरैर्बाणैर्भातीति "क्वचित्" [ ५ । १ । १७१ ] डे शरभः सुभटस्तस्मिन् प्लोषः स्नेहस्तेन इन्धे दीप्यते क्विपि प्रत्यूहशलभप्लोषेत् पिकोल्लापेनापि कामोद्दीपनं भवति। पुनः किं० ऊर्ज्ञानं तत्त्वातत्त्वविषयं ताम् अर्दयतीति खण्डीकरोतीति णिजि अचि वर्धो यो "मायुः पित्तम् मानम् शब्दश्च" [उणादि० सू० ७२६] इति उणादिवचनात् मायुः शब्दः तं करोत्याख्यातीति वा णिजि क्विपि तल्लोपे वर्धमायू "य्वो" [ १ । ३ । २३ ] इति पश्चाद् यलोपः। कोऽर्थः ? तत्त्वातत्त्वज्ञानापहारकपञ्चमोल्लापकारक इति। कस्मिन् ? यते जितेन्द्रियलोके। किम्भूते ? 'षिधूच् संराद्धौ' [ ११८५ ] सिध्यतीति क्विपि सित् सपद्यमानः–'हिंट्ट गति-वृद्धयोः' [ १२९५ ] इति "युवर्ण-वृ-द०" [ ५ । ३ । २८ ] इत्यलि–हयो ज्ञानं यस्य स सिद्धयस्तस्मिन् ज्ञानवतीत्यर्थः। पुनः कि० ई शोभां प्रददातीति क्विपि ईप्रदाः सप्तम्यां "लुगातोऽनापः" [ २ । १ । १०७ ] इति आलोपः एतावता ज्ञानिन्यपि जितेन्द्रियजनेऽपि, सर्वत्र शोभाकरेऽपि ज्ञानापहारः पञ्चमोल्लापकारक इत्यर्थः। तेषामपि तच्छ्रवणाद् विह्वलीभवनेन तत्त्वातत्त्वविचारलोपात् ॥ १०३ ॥

इति पिकं व्यावर्ण्य मेघं वर्णयति–तथाहि—

---

१ यथा अज्स्याम् इत्यत्र जस्य गत्व न भवति तथा अत्रापि पस्य वत्वम् कस्य च गत्व न भवति।

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१०४॥
[ सिद्धयेवर्धमानस्ताऽत्ताम्रा यन्न ! खमण्डली।
प्रत्यूहशलभप्लोषे दीप्र ! दीपाङ्कुराय तेः ॥१०४॥]

[ १ सिद्ध + या + ई = सिद्धये । अनेन एकारान्तपदेन 'वर्धमान'पदस्य विशेषणसमास +सिद्धयेवर्धमान -प्रथमान्तम् । अत्र वर्धमानपदम् विष्णुवाचकम् । २ स्तन्+क्विप्= स्तन्-प्रथमैकवचने-स्ता इति मेघविशेषणम् । स्ता + अत् + ताम्र + आस् = स्ताऽत्ताऽऽम्रा + अन्न = स्ताऽत्ताऽऽम्रायन्न । स्ताऽत्ताऽऽम्रा प्रथमान्तम् । इदमपि मेघविशेषणम् । ३ अन्न ! । ४ ख+मण्ड+ली=खमण्डली —खमण्डली । ५ प्रति + ऊह + शरभ = प्रत्यूहशलभ, तेषा प्लोषे प्रत्यूहशलभप्लोषे सप्तम्येकवचनम् । ६ दीप्र ! इति संबोधनम् 'अन्न' इत्यस्य विशेषणम् । ७ चतुर्थ्यन्तम् । अत्र 'दीपाङ्कुराय भव' इत्यर्थसूचनाय 'भव' इति क्रिया अव्याहार्या । ८ ता + ई=ते प्रथमैकवचनम् । ]

व्याख्या—हे अन्न ! मेघ ! हे प्रत्यूहशलभप्लोषे दीप्र ! प्रतिकूलः स्वगर्जिते प्रतीप ऊहो मनोऽभिप्रायो येषां ते प्रत्यूहशरभा अष्टापदास्तेषां प्लोषे विनाशे दीप्रो दीप्यमानस्तस्य स०, मेघस्य शरभवैरित्वात् । त्वं दीपाङ्कुराय दीप्यत इति "नाम्युपान्त्य०" [५।१।५४] इति के दीपः—दीप्यमानः—योऽङ्कुरः प्ररोह अर्थाद् वनस्पतीनाम् तस्मै भव इति सम्बन्धः । त्वं किं० सिद्धा जगत्प्रतीता या या लक्ष्मीस्तामीयते कामकेलये गच्छतीति क्विपि सिद्धयेयों वर्धमानो विष्णुरिव सिद्धयेवर्धमानः श्यामवर्णत्वात् । तथा [1]स्तनयं गर्जति क्विपि सौ "नि दीर्घः" [१।४।८५] इति दीर्घे "नाम्नो नः०"[२।१।९१] इति नलोपे स्ता गर्जन् विशेषणसमासे सिद्धयेवर्धमानस्ता । पुनः किं० आत्ताम्राः न विद्यते त् तकारो यत्र स अत् यस्ताम्रः, एतावता आम्रस्तम् आसेयति शोभयति जलसेकेनेति आत्ताम्राः । पुन किं० खस्य सूर्यस्य मण्डम्—शोभाम्—'लीङ् द्रवीकरणे' [१९४२] युजादित्वात् णिचोऽभावे लयति विशृणाति क्विपि खमण्डलीः । पुन. किं० तां लक्ष्मीम् ईयते गच्छतीति क्विपि तेः ॥१०४॥

मेघं व्यावर्ण्य सहकारं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१०५॥
[ सिद्धयेवर्धमानस्तात् ताऽऽम्रा ! यन्नखमण्ड ! लीः ।
प्रत्यूहशलभप्लोपेदीप्र ! दीपाङ्कुरायेंतेः ॥१०५॥]

---

१ अत्र 'गर्जति' इत्यस्य गदर्भात् 'स्तनति' इति उचितम् अन्यथा-'स्तनय' इत्यस्य स्वीकारे-'स्ता' शब्दो न भेत्स्यति । २ यद्यपि लिखितपुस्तके 'आशयति' पाठ परन्तु तेन 'आ' इति क्वापि न सेत्स्यति तत अत्र मयोध्य 'आसयति' इति पाठ स्वीकृत । ३ 'अत् + ताम्र.= अत्ताम्र.' स्यात्

[ १ ई + वन् + एवन् + ऋद्ध + मान = एवर्धमान । सिद्ध + एवर्धमान - सिद्धयेवर्धमान प्रथमान्तम् । २ स्तात् क्रियापदम् । ३ तन् + विच् = ता प्रथमान्तम् । ४ आम्र ! सबोधनम् । ५ 'अ' वाक्यालङ्कारे ! ता + आम्र + अ = ताऽऽम्रा । ६ यत् 'यस्माद्' अर्थे । ७ नख + मण्ड = नखमण्ड ! संबोधनम् । ८ ली प्रथमान्तम् । ९ प्रति अव् = प्रत्यू + ह + शर + भ = प्रत्यूहशरभ = प्रत्यूहशलभ + प्लोष + ई = प्रत्यूहशलभ-प्लोषे + दीप्र = प्रत्यूहशलभप्लोषेदीप्र ! इति अखण्डं सबोधनम् । १० दीप + अङ्कुर + आयते = दीपाङ्कुरायते । ]

व्याख्या—हे आम्र ! सहकार ! तथा हे नखमण्ड ! नखप्राया फलादिनाऽल्पत्वात् "मण्डा त्वामलक्याम्" [हैम० अने० स० द्विस्वरकां० श्लो० १४०] इत्यनेकार्थवचनात् मण्डा आमलकीवृक्षो यस्मात् स नखमण्डस्तस्य सं० । तथा हे प्रत्यूहशलभप्लोषेदीप्र ! प्रतिपूर्वाद् 'याचना'अर्थात् अवतेः क्विपि प्रत्यूर्याचकोऽर्थात् फलादिश्रियः, तस्य हो हस्तः स एव शराज्जलाद् भवतीति "क्वचित्" [ ५ । १ । १७१] डे शरभम् कमलं हस्तकमलं तत् 'प्लुषश् स्नेहन-सेचन-पूरणेषु' [ १५६२ ] इति पुष्णातीति पूरयतीति कर्मणोऽणि प्रत्यूहशलभप्लोषी या ई फलादिका श्रीः तया दीप्रो दीप्यमानस्तस्य सं० । त्वम् आ समन्तात् ईयन्ते गच्छन्ति वनि एवानः पन्थास्तेषु ऋद्धः सुच्छाया-अप्-पर्णादिना समृद्धो मानः पूजा यस्मात् स एवर्धमानः 'स्तात्' इति क्रियासम्बन्धः । त्वं किम्भूतः ? 'षिधौ शास्त्र-माङ्गल्ययोः' [ ३२१ ] इति सेधति स्म—"गत्यर्थाकर्मक०"[५ । १ । ११] इति क्ते—सिद्धो माङ्गल्यभूतः । पुनः किम्भूतः ? तनोतीति विचि ता विस्तारकः, कस्याः ? दीपाङ्कुरायतेः दीप्यन्त इति "नाम्युपान्त्य०" [ ५ । १ । ५४ ] इति के दीपाः प्रदीप्यमाना ये अङ्कुराः प्ररोहास्तेषामायतिर्विस्तारः तस्याः । पुनः किं० लीयते इति क्विपि लीः श्लिष्यन् कामो यस्मात् स लीः । आम्रादपि हि कामो दीप्यते ॥ १०५ ॥

इति सहकारं व्यावर्ण्य निम्बं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१०६॥
[ सिद्धये वर्धमा नः स्तात् ताऽऽम्रा यन्नखम् अण्डलीः ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरा यैतेः ॥१०६॥ ]

[ १ चतुर्थ्यन्तम् । २ व + ऋद्ध + मा = वर्धमा – इद पद 'निम्ब'शब्दसबन्धिनम् अन्तिमम् वकारम् अर्थात् वकारम् सूचयति—प्रथमैकवचनम् । ३ न पष्ठीबहुवचनम् । ४ स्तात् क्रियापदम् । ५ ता + आम्र + अस् = ताम्रा –प्रथमैकवचनम् । ६ इ + अञ्ज = यन् प्रथमैकवचनम् । इद पद 'निम्ब' शब्दगतम् आद्य निवर्ण सूचयति । ७ अखम् प्रथ-

मैकवचनम् । इद पदं 'निम्ब' शब्दमध्यगतम् 'म्'वर्ण सूचयति । ८ अण्ड + ली = अण्डली: प्रथमैकवचनम्–'निम्ब' विशेषणम् । ९ सप्तम्यन्तम् । १० दीप्र + दीप + अङ्कुर+अस्= दीप्रदीपाङ्कुरा –प्रथमैकवचनम्–'निम्ब' विशेषणम् । ११ य + ता+ई = यते – एकारान्तम् प्रथमैकवचनम् 'निम्ब' विशेषणम् । ]

व्याख्या–वकारेण ऋद्धो मा वाचको नः अस्माकं सिद्धये रोगापहारादिकार्यनिष्पत्तये स्तात् इति सम्बन्ध । किम्भूतः ? इकारम् अञ्चति गच्छति इति क्विपि सौ पदस्य" [ २ । १ । ८९ ] इति गलोपे यत् इकारान्वितो यो न् नकारः तस्मिन् अखः अशून्य. म् मकारो यस्मिन् स यन्नखम् एतावता निम्बः इत्यर्थः । कि० तया पत्रादिश्रिया आम्रवत् सहकारवत् असति शोभते क्विपि ताऽऽम्राः । पुन' किं० अण्डानि पक्षिपेश्य' तेषां लीः श्लेषो यस्मिन् स अण्डलीः पक्षिणां मालकादिसद्भावात् । पुनः किं० दीप्रो यो दीपः प्रदीपस्तत्सदृशा अङ्कुराः प्ररोहाः पत्राद्युद्भवाः तैः असति शोभते क्विपि दीप्रदीपाङ्कुराः । कस्मिन् ? प्रत्यूहा विघ्ना' तद्धेतुभूता रोगादयस्त एव शलभाः पतङ्गाः तेषां प्लोषे विनाशे यथा दीपः पतङ्गान् तथाऽयमपि रोगान् दहतीत्यर्थः । पुनः किं० "यस्तु मातरिश्वनि" [ ] इत्येकाक्षरात् यः वातः तेन तां शोभाम्, ईयते गच्छतीति क्विपि यतेः ॥ १०६ ॥

इति निम्बं व्यावर्ण्य वातं वर्णयति तथाहि–

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१०७॥**

['सिद्धयेव[1][2]र्धमानस्ता[3]त्ताम्रा यँ[4]द् नँ[5] खँ[6]मण्डलीं ।
प्रँ[7]त्यूहशलभप्लोषे दीप्रदीपा[8]ङ्कुरायतेः[9] ॥१०७॥]

[ १ सित् + हय + ङीप् = सिद्धयेव् – प्रथमान्तम् । २ आ + ऋद्ध + मान = अर्धमान – प्रथमान्तम् । सिद्धयेव् + अर्धमान – सिद्धयेवर्धमान = सिद्धयेवर्धमान । ३ ता + आत्त + आम्र + अस् = ताऽऽत्ताऽऽम्रास्=तात्ताम्रा –प्रथमान्तम्– 'वन'स्य विशेषणम् । अथवा त + आत् = तात् + ताम्र + अस् = तात्ताम्रा । ४ यद् यस्मात् अथवा 'यत्' प्रथमान्तम् ५ न निषेधवाची । न अते – न गच्छे इति न अपि तु अते एव – गच्छे एव इति आशय ६ खमण्डलीम् – द्वितीयान्तम् । 'अते' कर्मकारकम् । ७ प्रति + ऊ + हन् = प्रत्यूह + शलभ + प्लोषे = प्रत्यूहशलभप्लोषे सप्तम्यन्तम् । ८ दीप्र + दीप +अङ्कुर + अस् = दीप्रदीपाङ्कुरा प्रथमान्तम् । ०पाङ्कुरा + अते = ०पाङ्कुरायते = पाङ्कुरायते । ९ अते 'अत्' धातो सप्तम्या द्वितीयपुरुषैकवचने अते । ]

व्याख्या–हे अँ [1]अत्र विरामाविवक्षया " अ-इ-उवर्णस्यान्ते० " [ १ । २ । ४१ ] इत्यनुनासिक । ने वाया त्वं खमण्डलीं नभोमण्डलम् अते' सततं

---

१ अत्र पाठ अस्पष्ट, तस्य स्थाने 'अ वायो ! त्वम्' इति अथवा 'न वाया. त्वाम्' इति पठ्येत तदा कोऽपि अर्थं ज्ञातु सुगम ।

न गच्छेः? अपि तु गच्छेत् एव त्वन्मार्गत्वात् तस्याः। त्वं किं० दीप्रा ये दीपाङ्कुरास्तान् अस्यसि इति क्विपि दीप्रदीपाङ्कुराः दीपविध्यापकत्वात्। पुनः किं० 'षिधू गत्याम्' [ ३२० ] सेधसि इति क्विपि सित् गामुकः। कथम्? प्रति लक्षीकृत्य। किं? तायृङ् सन्तान-पालनयोः [ ८०६ ] इति तायन्ते पालयन्ति इति क्विपि ताः पालका रक्षायुक्ता तैः आत्तं पालनाय आश्रितं यत् आम्रैर्वृक्षविशेषैः उपलक्षणाद् अन्यैरपि असते शोभते क्विपि तात्ताम्रा वनम्,तल्लक्षीकृत्येति। अथवा तकारम् 'अत सातत्यगमने [२७९] णिगि आतयति गमयति दूरीकरोति इति यावत् क्विपि तात् यः ताम्रः—एतावता आम्रः तैरसतीति, शेषं पूर्ववत्। वने हि वातः प्रचुरो भवतीत्येव वर्णनम्। त्वं किम्भू० 'हिंट्ट गति-वृद्ध्योः' [ १२९५ ] इति अतः "युवर्णे०" [ ५। ३। २८ ] इति अलि हयः-गमनम् तमीप्सतीति क्विपि सौ "पदस्य" [ २। १। ८९। इति सलोपे "धुटस्तृतीयः" [ २। १। ७६ ] इति पस्य बत्वे हयेब् गमनेच्छुः। कस्मिन्? 'अव रक्षण०'[ ४८९] इति इच्छार्थात् क्विपि ऊः इच्छा तया हन्ति गच्छति क्विपि "अहन्-पञ्चम०" [ ४। १। १०७ ] इति हन्वर्जनाद् दीर्घाभावे ऊह्रा यः शलभः श्वावित्—तस्मिन् स्वजातितया एकत्र निवासितया वा पुष्णाति स्निह्यति इति अचि ऊहशलभप्लोषो मृगः तस्मिन्—वायुर्मृगवाहनम्[1] ततस्तत्र गमनेच्छुरित्यर्थः। पुनः किं० आ समन्ताद् ऋद्धम् "अवर्णस्येवर्णादिना०"[ १। २। ६ ] इति अरि अर्द्धम्। 'माङ्क् मान-शब्दयोः' [ ११३७ ] इत्यतोऽनटि मानः शब्दो यस्य स अर्धमानः एतावता प्रोच्चैर्वान् इत्यर्थः॥ १०७॥

इति वातं व्यावर्ण्य रात्रिं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते॥ १०८॥
[सिद्धयेवर्धमानस्ताऽऽत्ताऽऽम्रायन्नखमण्डली।
प्रत्यूहशलभप्लोषे! दीप्रदीपाङ्कुरायते॥ १०८॥]

[ १ सिद्ध + या + ड = सिद्धय + ई सिद्धये वर्धमानस्तन + णिच् +क्विप्। स्तन् = स्ता। सिद्धयेवर्धमान + स्ता = सिद्धये वर्धमान स्ता + आत्त + आम्ला + अम् = सिद्धयेवर्धमानस्तात्ताम्रा। अत्र 'वर्धमान' पदं स्तनस्य विशेषणम् तेनैव च सह समस्तम्। २ अन्न+ख + मण्ड + ली = अन्नखमण्डली। ० स्तात्ताम्रा + अन्न ० = ० स्तात्ताम्रायन्न०। ३ प्रति ऊह + शलभ = प्रत्यूहशलभप्लुष् + ड= प्ल। प्रत्यूहशलभ। प्ल + उषे = प्रत्यूहशलभप्लोषे!

१ वायोर्मृगो वाहनम् इति अथवा वायुर्मृगवाहन इति पाठ समुचित।

संबोधनम् । ४ दीप्रदीपाङ्कुर + अस् = दीप्रदीपाङ्कुरास् । ५ अत + ईम = अतें ० पांङ्कुरास् + अतें = ० पाङ्कुरायतें = ० पाङ्कुरायते । अत्र 'अन' इति 'अत्'धानो पञ्चम्या द्वितीयपुरुषैकवचने क्रियापदम् । ]

व्याख्या—हे उषे ! रात्रे ! त्वं ई[1] शोभा—कर्म अत सततं गच्छेति सम्बन्धः । त्वं किम्भूता ? सिद्धा धनधान्यादिना समृद्धा पुरुषास्तान् कामक्रीडार्थं यान्ति गच्छन्ति "आतो ड०" [ ५ । १ । ७६ ] इति डे सिद्धयाः कामिन्यस्तासां इः कामस्तेन वर्धमानौ वर्धनशीलौ स्तनौ करोतीति णिजि क्विपि सौ 'नि दीर्घः" [ १ । ४ । ८५ ] इति दीर्घे "दीर्घङ्याब्०" [ १ । ४ । ४५ ] इति सिलोपे "नाम्नः०" [ २ । १ । ९१ ] नलोपे सिद्धयेऽर्धमानस्ता—रात्रौ स्त्रियः कामुकमभिसरन्ति, तत्र कामोद्रेकेण स्पृष्टानां स्तनानामपि वृद्धिर्भवत्येवेति रात्रिरेव वृद्धिहेतुरिति । पुनः किं० आत्ता गृहीता या आम्ला म्लानिः कालुष्यमिति यावत्, तया असति शोभते क्विपि आत्ताम्लाः । पुनः किं० अन्नवत् मेघवत् खस्य सूर्यस्य, मण्डलम्[2] भूषाम् कान्तिमिति यावत्, तं लीयते श्लिष्यतीति धातूनामनेकार्थत्वादाच्छादयति क्विपि अन्नखमण्डली । यथा मेघः सूर्यमाच्छादयति तथा रात्रिरपीत्यर्थः । रात्रावपि सूर्यस्यादृश्यमानत्वात् । पुनः किं० प्रतिकूलो दीपस्वर्णभ्रमकारी ऊहो मनोऽभिप्रायो येषां ते प्रत्यूहाः शलभाः पतङ्गास्तेषां प्लोपे दाहे भवतीति "क्वचित्" [ ५ । १ । १७१ ] डे प्रत्यूहशलभप्ला । यतः किं० दीप्रैर्दीपाङ्कुरैरससि शोभसे क्विपि दीप्रदीपाङ्कुराः ॥ १०८ ॥

इति रात्रिं व्यावर्ण्य शलभं वर्णयति—तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोपे दीप्रदीपाङ्कुरायते ॥१०९॥
[ सि[1]द्धये[2]ऽ[3]व[4]र्धमानस्ताऽत्ताम् रायं नं खमण्डलि ।
प्रत्यूह ! [10]शलभ ! [11]प्लोपे दीप्रदीपाङ्कुरायंते ॥१०९॥ ]

[ १ सिद्ध+या=सिद्धयम् द्वितीयान्तम् 'रायम्' इत्यस्य विशेषणम् । २ ईर्=क्विप्=ई प्रथमान्तम् शलभस्य विशेषणम् । अत्र 'सिद्धयम्' पदे मकारस्य तथा 'ई' पदे विसर्गस्य उच्चारणाभावे सिद्धय+ई=सिद्धये । ३ 'अव' इति 'अव्' धातोः पञ्चम्या द्वितीयपुरुषैकवचने क्रियापदम् । अव—अवगच्छ—जानीहि—इत्यर्थः । अस्य क्रियापदस्य 'न'पदेन अन्वयः ततः न अव—न जानीहि—इति भावः तथा 'अत्ताम्' पदेन सह अपि 'अव' क्रियापदस्य सम्बन्धः, ततः 'अत्ताम् अव'—'हिंसां जानीहि'—इत्यपि द्वितीयोऽर्थः । ४ ऋद्ध+मान+स्तन्=ऋद्धमानस्ता । अव+ऋद्धमानस्ता=अवर्धमानस्ता । सिद्धये+अवर्धमानस्ता=सिद्धयेऽवर्धमानस्ता । ५ अट्ट्+क्विप्=अत्+तल=अत्ता—द्वितीयाविभक्तौ अत्ताम् 'अव' इत्यस्य कर्म । ६ रायम् द्वितीयान्तम् 'न अव' इत्यस्य

१ अत्र 'ईम् शोभाम् कर्म' इति पाठ उचितः । २ अत्र 'मण्डम्' इति युक्तम् । 'मण्डल' पदे स्वीकृते मण्डल + ली 'मण्डलली' इत्येव भवेत्, 'मण्डली' इति तु न भवेत् ।

कर्म । ७ न निषेधवाची । ८ ख+मण्डल+क्यङ्+क्विप्-खमण्डला—सप्तम्या एकवचने—खमण्डलि । ९ प्रति+ऊह=प्रत्यूह । सबोधनम् । १० शलभ । सबोधनम् । ११ सप्तम्या एकवचनम् । १२ दीप्र+दीप+अङ्कुर+आयत=दीप्रदीपाङ्कुरायते सप्तम्या एकवचनम् । ]

व्याख्या—हे शलभ ! पतङ्ग ! हे प्रत्यूह ! प्रतिकूलः ऊहो यस्य स प्रत्यूहः तस्य सं० । त्वं दीप्रा दीप्यमाना ये दीपाङ्कुरास्तेषामायतं विस्तारं तस्मिन् दीप्रदीपाङ्कुरायते रायं स्वर्णम् न अव 'अव रक्षण०' [४८९] इति अवगमार्थात् पञ्चम्या हौ नस्य निषेधार्थत्वात् मा अवगच्छ—इत्यर्थः । यतः रायं किम्भूताम् ? 'अद्दि हिंसाऽतिक्रमयोः' [६७४] इति अतः क्विपि भावे तलि अत्ता हिंसा, तां हिंसामेवेत्यर्थः । अर्थात् तवैव दीप्रदी० । किम्भू० सिद्धा सम्पन्ना या लक्ष्मीर्यस्य तत् सिद्धयम् लक्षणया समर्थमित्यर्थः । कस्मिन् ? प्लोषे दाहे अर्थात् तवैव । पुनः किम्भूते ? खमण्डलि खमण्डलं सूर्यमण्डलं तद्वदाचरतीति क्यङि, क्विपि तयोर्लोपे खमण्डलाः तस्मिन् "ल्गातोऽनापः" [२ । १ । १०७] इति आलोपे खमण्डलि मार्तण्डमण्डलसमाने इत्यर्थः । त्वं किम्भूतः ? ऋद्धो यो मानोऽभिमानस्तेन स्तनयति इव—गर्जतीव—इति क्विपि सौ "नि दीर्घः" [१ । ४ । ८५] इति दीर्घे "दीर्घङ्याब्-व्यञ्जनात् सेः" [१ । ४ । ४५] इति सूत्रेण सेर्लोपे "नाम्नो नोऽनह्नः" [२ । १ । ९१] इति सूत्रेण नलोपे ऋद्धमानस्ता—अहङ्कारवान्—इवेत्यर्थः । पुनः किं० 'ईरिक् गति-कम्पनयोः' [१११५] इति धातोः ईर्ते कम्पते इति वाक्ये क्विपि ई:-कम्पमान—इत्यर्थः ॥१०९॥

शलभं व्यावर्ण्य शरावं वर्णयति—तथाहि—

**सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।**
**प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥११०॥**
**[[1]सिद्धये [2]वर्धमानः [3]स्तात् [4]ताम्रायन्[5]नखमण्डलीम् ।**
**[6]प्रत्यूह[7]शलभप्लोषे दीप्रदीपाङ्कुरायतेः[8] ॥११०॥ ]**

[ १ चतुर्थ्यन्तम् । २ प्रथमान्तम् एकवचनम् । ३ क्रियापदम् । ४ ताम्र+क्यङ्+क्विप्=ताम्राः । ५ अन्न+ख+मण्डलीम्=अन्नखमण्डलीम्—द्वितीयान्तम् । ६ प्रति-आश्रित्य । ताम्रास्+अन्न० ताम्रायन्न० । ७ ऊहशलभप्लोषे सप्तम्या एकवचनम् । प्रति+ऊ+ह+शर+भस्=प्रत्यूहशलभ=प्रत्यूहशलभस्य प्लोष प्रत्यूहशलभप्लोष अस्य सप्तम्या एकवचनम् । ८ दीप्रदीपाङ्कुरायते—दीप्र+दीप+अङ्कुर+आयति—अस्य षष्ठ्या एकवचने रूपम् । ]

व्याख्या—वर्धमानः शरावः अन्नं धान्यं, तस्य खानि खण्डानि तेषां मण्डली श्रेणी तां प्रति आश्रित्य सिद्धये—पाकाय—स्तादिति सम्बन्धः । कस्मिन् सति ? प्लोषे

१ 'हिंसाम् एव' इति पाठापेक्षया 'हिमाम् अव' इति पाठ समीचीनभावसूचक अर्थात् दीपसमूहे स्वर्ण न अवगच्छ किन्तु हिमाम्—आत्मन हिमाम्—आत्मन हिमारूपम् रायम् अवगच्छ । २ दीप्रदीपाङ्कुरायते तवैव हिंसा अवगच्छ । ३ हे शलभ ! कम्पमानस्त्वम् ।

तापे–दाहे इत्यर्थः । कस्याः ? दीप्रः–अग्निः–तस्य दीपाङ्कुराः कान्तिप्ररोहाः, तेषाम्-आयतिः विस्तारस्तस्याः सम्बन्धिनि इत्यर्थः । वर्धमानः किं ताम्रवदाचरतीति क्यङि । क्विपि, तल्लोपे "य्वोः प्वय्०" [४ । ४ । १२१] इति यलोपे ताम्राः । 'ऊयैङ् तन्तु-सन्ताने' [८००] इत्यत क्विपि ऊः सम्बद्धीभवन् यः हः दारु, शरः–तृणविशेषः, तौ 'भस् भर्त्सन-दीप्त्योः' [५५१] इत्यतो बभस्ति-भर्त्सति–इति क्विपि ऊहशलभो यः प्लोषो दाहः तापः, तस्मिन् ऊहशलभप्लोषे ॥११०॥

इति कार्त्स्न्येन अर्थान् प्रकीर्णकान् प्रादुर्भाव्य ग्रन्थसमाप्तिं चिकीर्षुः यस्य सम्यगवगमेन विद्वज्जनमनस्सु नानाविधानेकार्थसमुज्जृम्भणं भवति तदेव व्याकरणं वर्णयति–तथाहि—

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥१११॥
[ सिद्ध[1] ! ये[2] ! वर्धमानं[3] स्तात्[4] ताम्रायन्[5] न[6] खमण्डली[7] ।
प्रत्यूहशलभ[8] ! प्लोषेत्[9] ईप्रदीपा[10]ङ्कु[11]रायते[12] ॥१११॥ ]

[ १ हे सिद्ध ! संबोधनम् । २ या+ई=ये इदमपि एकारान्तम् संबोधनम । ३ वर्धमानम् प्रथमान्तम् , अनुस्वारो न गणनीय । ४ क्रियापदम । ५ त+अम्+रै+अन्=ताम्रायन् प्रथमान्तम् । ६ न षष्ठ्यन्तम् । ७ ख+म्+अम्+ल=खमम्+ल=खमण्ड+ली=खमण्डली प्रथमान्तम् । ८ प्र+ति+ऊह्–अम्=प्रत्यूहस्=प्रत्यूहश्+अल+भ ( 'भा' धातो 'भ' इति ) प्रत्यूहशलभ ! संबोधनम् । ९ पु+ल+ओ+प–इति=प्लोषेत् प्रथमान्तम् । १० ई+प्रदी+पा+आम्=ईप्रदीपाम् षष्ठीबहुवचनम् । ११ कु प्रथमान्तम् । १२ आयते· षष्ठ्यन्तम् । ]

व्याख्या–'सिद्धहेमचन्द्रम्' इत्यभिधानात् "ते लुग् वा" [३ । २ । १०८] इत्युत्तरपदलोपात् सिद्धं सिद्धहेमचन्द्रं व्याकरणम् तस्य सं० हे सिद्ध ! श्रीहैमव्याकरण ! । तथा 'यांक् प्रापणे' [१०६२] इति याधातुम् ईयसे अयसीति क्विपि येः, तस्य सं० हे ये ! अत्र "अदेतः स्यमोः०" [१ । ४ । ४४] इति लुक् । तथा प्रेण उपसर्गेण उपलक्षणत्वात् अन्यैरपि, [3]ति उपलक्षणत्वात् परस्मैपदम् "उपसर्गादस्योहो वा" [३ । ३ । २५] इति प्रतिपादितं [4]यैयोस्तौ प्रती यौ ऊहशौ श-सयोरैक्यात् ऊह च अस् च ऊहसौ धातू यस्मिन् तत् प्रत्यूहस् । अत्र 'अस्' इति धातुग्रहणात् "सो रु" [२ । १ । ७२] इति रुत्वाभावः, तथा 'अली भूषण०' [९१९] इति अल्धातुस्तेन भातीति "क्वचित्" [२ । १ । १७१] डे अलभं प्रत्यूहश् च तत्

१ तस्याः–आयतेः सबन्धिनि दाहे । २ यद्यपि प्रतौ 'कौंसनार्थान्' इत्येव स्पष्ट लिखितम् परन्तु तस्य स्थाने अस्माभिः संशोध्य सूचित पाठ अत्र निर्दिष्ट । ३ 'ति'प्रत्ययस्य परस्मैपदत्वात् अत्र 'ति'पदेन परस्मैपदस्य सूचनम् । ४ ययो धात्वो अर्थात् 'ऊह्–अस्' धात्वो ३ । ३ । २५ । सूत्रेण पक्षे परस्मैपद सूचितम् तौ द्वौ धातू अत्र ग्राह्यौ–इति आशय ।

अलभं च प्रत्यूहशलभं तस्य सं० हे प्रत्यूहशलभ ! त्व 'नख' इति, न' अस्माकं वर्धमानं दिनं दिनं प्रति वर्धनशीलं स्तादिति सम्बन्धः । त्वं किम्भूतं ? पञ्चम्याः ह्यस्तन्याः अद्यतन्या वा युष्मदर्थबहुवचनं तैर्युक्ता । 'अम् शब्दभक्त्योः'[३९१] इति अम्, 'कै गै रै शब्दे' [३६–३८] रै 'अन् श्वसक् प्राणने' [१०८९] अन् एते धातवो यस्मिन् तत् ताम्रायन् एतेषां परस्मैपदसम्भवात् । तथा खेन खानुबन्धनम् मोऽन्तः "खित्यनव्ययः०" [३ । २ । १११] इति यस्मिन् तत् खम्–यथा–पण्डितंमन्य इति । तथा अं अनुस्वारस्तं लातीति "आतो डः०" [५ । १ । ७६] इति डे, ड-लयोरैक्यात् अण्डः, लीः 'लीङ्च् श्लेषणे' [१२४८] इति धातुर्यस्मिन् तत् अण्डलीः । अत्र व्याकरणस्य नपुंसकत्वेऽपि धातुग्रहणात् "क्लीबे" [२ । ४ । ९७] इति न ह्रस्वः । पुनः किम्भूतम् ? 'प्' 'ऌ' 'ओ'[2] 'ष्' एते इत् अनुबन्धा यस्मिन् तत् प्लोषेत् यथा[3] रुधूंपी [१४७३] 'गमॢं गतौ' [३९६] इति, 'ओलस्जैति'[१४७०] 'डुलभिंष्' [७८६] इति । पुनः किम्भूतं ? कुः स्थानम्, कस्याः ? आयतेः–विस्तारस्य । पुनः केषाम् ? ईङ्च् गतौ' [१२५२] ई, प्रपूर्वो 'दीङ्च् क्षये' [१२४४ दी, 'पांक् रक्षणे' [१०६७] 'पां पाने' [२] वा पा, एतेषां द्वन्द्वे "लुगातोऽनाप" [२ । १ । १०९] इत्यालोपे सिद्धम् ईप्रदीपाम् ॥१११॥

इति श्री४सोमसुन्दरसूरि-तत्पट्टप्रभाकरश्रीजयचन्द्रसूरि-वाचकचक्रचक्रवर्ति-चरित्ररत्नगणिशिष्यश्रीजिनमाणिक्यगणिविरचिता शतार्थी जीयात् ।

आसीत् सोमगणव्योमसोमः श्रीसोमसुन्दरः ।
सूरिर्भूरिगुणग्रामरामणीयकमन्दिरम् ॥१॥
तत्पट्टोदयशैलाग्र–जाग्रत्तरदिवाकराः ।
मुनिसुन्दरसूरीन्द्राः पारीन्द्राः परवारणे ॥२॥
सूरिः श्रीजयचन्द्रोऽभूद् यशोनिस्तन्द्रचन्द्रिकः ।
कृतिनामाननं येनाकारि कैरवकाननम् ॥३॥
तत्पट्टकमलाभाले कालेयतिलकाकृतिः ।
अभूत् प्रभूतविद्याभूः सूरिः श्रीरत्नशेखरः ॥४॥

---

१ तै 'त'प्रत्ययै अत्र 'त्वम्' किम्भूतम्' इत्यस्य अनुसधानात् 'युक्तम्' इति उचित पाठ
२ अत्र प्रतौ 'उ' 'ष्' इति लिखित पाठ तथापि तेन 'प्लोषेत्' इति न सेत्स्यति तत 'ओलस्जैति' इत्यत्र 'ओकार'दर्शनात् अस्माभि 'ओ''ष्' इति सशोध्य उचित पाठ स्वीकृत ।
३ 'रुधूंपी' अत्र प्, 'गमॢं' अत्र ऌ, 'ओलस्ज' अत्र 'ओ' तथा 'लभिंष्' अत्र ष्–एवम् एते प्–ऌ–ओ–षू अनुबन्धा ज्ञेया. ।

तत्पट्टप्रकटाम्भोज–प्राभातिकविभापतिः ।
भाति विश्वातिशायिश्रीश्रीलक्ष्मीसागरश्चिरम् ॥५॥

सूरिः सोमजयाह्वानः स्थानमानन्दसंविदाम् ।
द्वितीयोऽप्यद्वितीयश्रीविशेषगुणशेखरः ॥६॥

षट्तर्कागममर्मधर्मसमयप्रोन्मथ्यजाड्यप्रथः,
साक्षाल्लक्षणवेदिवारणघटासंघट्टघण्टापथः ।
आसीद् वाचकनायकः सुकृतिनामानन्दनः स्यन्दनः,
सर्वाङ्गीणगुणश्रियां युगवरश्चारित्ररत्नो गुरुः ॥७॥

जिनसुन्दरशिष्यः सन् युक्तं यो जिनसुन्दरः ।
कुतुकं यन्न कं चक्रेऽजिनं श्रीजिनसुन्दरम् ॥८॥

स्पष्टाऽष्टादशलक्षणाक्षतमतिप्राग्भारसारस्वतो–
द्गारस्तारकवारजित्वरयशःसम्भारविश्वम्भरः ।
तच्छिष्यः प्रतिपक्षपर्वतपथत्पक्षच्छिदाखण्डलः,
क्षोणीमण्डलमण्डनः स जिनमाणिक्यो गुरुर्गीयते ॥९॥

बुद्धिः का तव बौद्ध ! शुद्धमथि रे ! नैयाँस्तु नैयाय(यि)क !
व्याख्येयोऽसि न साङ्ख्य ! सैष विदुषां सीमा न मीमांसकः ।
दूरं दूरमरे विशन्तु विवरे यद्वा गिरेर्गह्वरे,
यस्माज्जल्पभरेऽपि जातु जिनमाणिक्यो न शक्यः परैः ॥१०॥

हार्पी चित्तान्यहार्पीन्नहि बहुविदुषामाभिनन्दीय वन्दी,
सप्राणी स्यान्न वाणी न च रुचिरतया चाचलीत्याचली वाग् ।
मायूरी कर्णपूरी भवति न सुतरामामरी पामरी यद्,
वाचः श्रीवाचकेन्द्रो जनयति जिनमाणिक्यनामाभिरामः ॥११॥

---

१ 'अजिनयोनि' शब्द हरिणपर्याय. । तत. "ते लुग् वा" । ३ । २ । १०८ । इत्यनेन 'अजिन'शब्दोऽपि हरिणपर्याय 'तत कम् अजिनम्–हरिणम्–जिनसुन्दर न चक्रे अपि तु समस्तमपि अजिन जिनसुन्दर चक्रे इति कुतुकम् । तत्परिहार. एवम्–अजिनम् अजिनानुयायिनम् क न जिनसुन्दर चक्रे ? अपि तु सर्वमेव चक्रे। अथवा अजिनम्–चर्म । लक्षणया क चर्मवन्त जिनसुन्दर न चक्रे ? सर्वमपि चर्मवन्त तथा चक्रे इति आशय । २ 'शुद्धपथि' इत्येवं सप्तम्यन्तं पठम् अर्थप्रद भवेत् । ३ न एया –न आगच्छे –इति आशय ।

भाष्यं साक्षितया विधाय सुधियो येऽन्वर्थमात्रं जगुः,
ये वाऽसंशयिताश्च तेन किल ताँस्तेनैष तेनेऽञ्जलिः ।
ये लक्षार्थसमर्थनप्रतिदिनव्यग्रात्मनस्तेष्वयं,
सन्नद्धो भवतीति रीतिरनघा श्रीवाचकाधीशितुः ॥१२॥

स्थानस्थानशतार्थीति, यथार्थाह्वानयोगतः ।
यो गतो जगति ख्यातिं, प्रति सोमप्रभादिति ॥१३॥

चारित्ररत्नवाचकचरणपरीचारचारुचरितेन ।
रचिता तेन शतार्थी, सतां कृतार्थीकरोतु मनः ॥१४॥
[युग्मम्]

व्यालाधीशमृणालशालिनि रजोजिद्भानुभाजालिनि,
प्रोद्यद्दिग्दलमालभारिणि नभोभृङ्गौघशृङ्गारिणि ।
यावद् राजमरालति प्रतिकलं राजा द्विपक्षीं दधत्,
तावच्छास्त्रमिदं विदग्धहृदयानन्दप्रदं नन्दतात् ॥१५॥

निधि-गुण-तिथि १५३९ मितवर्षे हर्षेण विनिर्मिता प्रशस्तिरियम् ।
जिनमाणिक्यगुरूणां शिष्यभुजिष्येण विजयेन ॥१६॥

॥ ग्रन्थाग्रम् १६९७ ॥

